* ओ३म् *

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण–महाभाष्यम्

[ श्रीकैय्यटकृतप्रदीपेन नागोजीभट्टकृतेन भाष्यप्रदीपोद्द्योतेन च विभूषितम् ]

तस्यायं

## प्रथमो भागः

स च—

परमतपस्विनां श्रीमताम्भगवान्देवाचार्याणामन्तेवासिना
महाविद्यालयगुरुकुलझज्जरस्योपाचार्येण
वेद-व्याकरण-साहित्य-दर्शन-आयुर्वेदाचार्येण वेदव्रतेन सम्पादितः
टिप्पणितश्च ।

प्रकाशकः—

हरयाणा-साहित्य-संस्थानम्
गुरुकुल झज्जर ( रोहतक )

| | | |
|---|---|---|
| प्रथमं संस्करणम् | २०१९ विक्रमाब्दे | मूल्यम् १५.०० |
| द्विसहस्रम् | १८८४ शकाब्दे | पञ्चदशमुद्राः |
| २००० | १९६२ खिस्ताब्दे | ( पन्द्रह रुपये ) |

# व्याकरण—महाभाष्य

वेद का पढ़ना पढ़ाना सब आर्यों का परम धर्म है। वेद की रक्षा और वेदार्थ ज्ञान के लिये व्याकरण का अध्ययन अत्यावश्यक है "रक्षार्थं वेदानामध्येयं व्याकरणम्"। हम सम्पूर्ण व्याकरण-महाभाष्य प्रदीप, उद्द्योत तथा टिप्पणी सहित छाप रहे हैं। हमारा संस्करण आज तक छपे सभी संस्करणों से शुद्ध, सुन्दर और प्रामाणिक है। सम्पूर्ण ग्रन्थ २६ × २०=८ साइज में दश खण्ड एवं पांच भागों में पूर्ण होगा। विवरण इस प्रकार है—

| | अजिल्द | सजिल्द | विशेष |
|---|---|---|---|
| १. नवाह्निक (१—४ आ०) | ७.०० | १५.०० | (छप गया) |
| २. नवाह्निक (५—६ आ०) | ७.०० | | |
| ३. प्रथमाध्याय (२-३-४ पाद) | ८.०० | १६.०० | (छप रहा है) |
| ४. द्वितीयाध्याय | ७.०० | | |
| ५. तृतीयाध्याय | ८.०० | १६.०० | (छपेगा) |
| ६ चतुर्थाध्याय | ७.०० | | |
| ७. पञ्चमाध्याय | ७.०० | १६.०० | (छपेगा) |
| ८. षष्ठाध्याय | ८.०० | | |
| ९. सप्तमाध्याय | ७.०० | १५.०० | (छप गया) |
| १०. अष्टमाध्याय | ७.०० | | |
| सम्पूर्ण ग्रन्थ का मूल्य | ७३.०० | ७८.०० | |

प्राप्तिस्थान—हरयाणा साहित्य संस्थान, पो० गुरुकुल झज्जर, जि० रोहतक

मुद्रकः—
श्रीयुतपण्डितभगवान्स्वरूपो न्यायभूषणम्
प्रबन्धकर्त्ता
वैदिकयन्त्रालय, अजमेर (राजस्थान)

# प्रकाशकस्य निवेदनम्

अहो महान् हर्षवर्षविषयोऽयं यन्नाम पाणिनिकात्यायनपतञ्जलीनां त्रिवाणीसङ्गमं व्याकरण-महाभाष्यं प्राकाश्यं नयतामाविर्भवति नश्चेतसि कश्चिदुल्लासविशेषः। अनल्पकल्पादिव निष्कल्पतां गतां निषद्वरे निषण्णां विषीदन्तीं गामिव पतञ्जलिगिरं परमतत्त्वविद्भिर्व्याकरणसूर्यविरजानन्ददयानन्दप्रभृतिभिः कथं कथमपि समुद्धृतां पुनः प्राणतीं लोकं लोकं को नाम न मोमुद्येत, कस्य वा कर्णयोराकर्णनरणिका न समुत्पद्येत। तेषामेवर्षीणामानृण्यं प्रपित्सूनामयं नः प्रयास इति प्रथमः कल्पः।

ऐदंयुगीनः खल्वेकतस्तावदार्षवचसां नैसर्गिकोऽभाव एव, अपरतश्च तदादरे कार्पण्यमिति विभाव्य प्राच्यविद्याविलासिनां चेखिद्यमानचेतसां सचेतसामात्मनि गुरुग्लानिमावहतां विदुषां काञ्चिदुपकृतिमुपेयान्नः प्रयत्न इत्यपि विपुलवित्तविरहितानामप्यस्माकमस्मिन् विषये प्रवृत्तिः।

"अष्टाध्यायीमहाभाष्ये द्वे व्याकरणपुस्तके" इति भूतार्थवचः कदर्थयतां "कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः" इति साम्रेडं समभिव्याहरतां पण्डितम्मन्यानां गर्वगीर्गालनायाऽस्तु तेषां मूर्द्धि तन्मूर्द्धन्यानां महाभाष्योपजीविना मञ्जूषाशेखरमनोरमाप्रभृतीनामिव दण्डपातः। वयं तु सरलहृदयेष्वृषिष्वेव श्रद्दधानाः प्रथमोक्तिमेव पिप्रथयिषवो जीवनान्तं यतामहे इत्येव भावबन्धो गुरुग्रन्थप्रकाशनाऽसमर्थानामपि नोऽत्र पदनिक्षेपधार्ष्ट्यमकृत।

अन्ततश्च प्राच्यविद्यारुचीनामार्षग्रन्थाध्येतॄणां विद्यार्थिनामपि वयं हितैषिणः। अद्य तावन्न क्वचिदपि सम्पूर्णं महाभाष्यं सटीकं समुपलभ्यते। सप्तमाष्टमाध्याययोर्भाष्यं तु सुतरामेव दुरापम्। अत एवाऽस्माभिः सर्वप्रथमं सप्तमाष्टमावध्यायावेव प्रकाशितौ, ततश्चादितः क्रमशः प्रकाशयामः। गुरुकुलेषु पाठनाय महाभाष्यग्रन्थानामभावं विलोक्यान्यांश्च विद्यार्थिनः सकरुणं चङ्क्रन्द्यमानान् चङ्क्रम्यमाणांश्च दर्शं दर्शं सत्स्वप्यनेकविघ्नेषु कृत्स्नं महाभाष्यं प्रदीपोद्द्योतसहितं विशुद्धं सर्वाङ्गसुन्दरं प्रकाशयितुं बद्धपरिकरा वयम्। सर्वेऽपि संस्कृतानुरागिणो वैयाकरणास्तु विशेषतः पुण्येऽस्मिन् कर्मणि सर्वविधं साहाय्यं वितरिष्यन्तीत्याशास्महे।

आर्षपाठविधेरनुचरो
भगवानदेव आचार्यः,
हरयाणा-साहित्य-संस्थानाध्यक्षः।

# सम्पादकीयम्

मान्याः सरस्वतीप्रेयांसो विद्वांसो वैयाकरणाश्च ।

विदितमेवैतत्तत्रभवतां भवतां मतिमतां यद्व्याकरणमन्तरेण कस्यामपि भाषायां न पाटवं शक्यमधिगन्तुमिति । व्याकरणेषु पाणिनेरष्टकं तत्र च पातञ्जलं महाभाष्यं श्रेष्ठमिति कथनं तु विदितवेदनमेव । व्याकरणाध्ययनस्य प्रयोजनानि "रक्षार्थं वेदानामध्येयं व्याकरण" मित्यादीनि भाष्यकृदुपवर्णितानि त्वनुपदमेव पस्पशायां पठिष्यन्ति भवन्तः । पतञ्जलेरनन्तरभावी वैयाकरणसम्प्रदाये प्रामाणिक आचार्यो भर्तृहरिर्वाक्यपदीये व्याकरणाध्ययनं मोक्षमाणाना "मजिह्मा राजपद्धति" रिति लिलेख । तद्यथा—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ १२१ ॥
अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ॥ १३ ॥
तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ॥ १४ ॥
यथार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः ।
तथैव लोके विद्यानामेषा विद्या परायणम् ॥ १५ ॥
इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥ १६ ॥

( वाक्यपदीये ब्रह्मकाण्डे )

महावैयाकरणेन महर्षिणा दयानन्देन सत्यार्थप्रकाशे संस्कारविधौ चाष्टाध्यायी-महाभाष्याद्यार्षग्रन्थानामध्ययनमत्यावश्यकमुद्घोषितं कौमुद्यादीनामाधुनिकानार्षग्रन्थानामध्ययनं वर्जयता । अन्ये चापि वैयाकरणप्रकाण्डा अष्टाध्यायीमहाभाष्ययोः क्रमेण व्याकरणाध्ययनं सर्वोत्तममिति प्रतिपादयन्ति साम्प्रतम् ।

यद्यपि सर्वेऽपि टीकाकृतोऽधिकृत्याभाणि भोजराजेन—

"दुर्बोधं यदतीव तद्धि जहति स्पष्टार्थमित्युक्तिभिः,
स्पष्टार्थेष्वतिविस्तृतिं विदधति व्यर्थैः समासादिकैः ।
अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैर्भ्रमं तन्वते,
श्रोतॄणामिति वस्तुविप्लवकृतः सर्वेऽपि टीकाकृतः ॥"

इन्द्रशब्दस्य विडौजा इति टीकाकृतां प्रतीयं भोजराजोक्तिः सुतरां सत्यैव। परन्तु श्रीकैय्यटकृतस्य "भाष्यप्रदीपस्य" श्रीनागोजीभट्टविरचितस्य "भाष्यप्रदीपोद्द्योतस्य" च महत्त्वं न तिरोहितं वैयाकरणनिकाये। द्वे अपि टीके यथास्थानं भाष्यस्य गूढाशयं विशदयतः। ईदृशस्य महत्त्वपूर्णग्रन्थस्य विषये चित्तं दुनोत्ययमुदन्तो यदद्य महाभाष्यपिपठिषुभिश्छात्रैः कुतश्चिदपि सम्पूर्णं महाभाष्यं कृतभूरिप्रयत्नैरपि नाधिगम्यते।

विद्यार्थिनां याञ्चया कृपाविष्टचेतसा श्रीमद्दयानन्दादिष्टपथानुगामिनाऽऽर्षपाठविधेः प्रबलप्रचारकेण महाविद्यालयगुरुकुलझज्जरस्याऽऽचार्येण श्रीमता भगवान्देवमहाभागेनादिष्टोऽहं सप्रदीपोद्द्योतस्य कृत्स्नस्य भाष्यस्य सम्पादनं समारभं वर्षद्वयपूर्वम्। यद्यपि गुरुकुलस्य गुरुतरकार्यभारान्मुद्रणालयस्य च दाविष्ठ्यान्नाशकं वाञ्छानुरूपं भाष्यं सम्पादयितुम्। पुनरप्यद्यावधि प्रकाशितेषु भाष्येष्विदं संस्करणं सर्वोत्तमं शुद्धं स्पष्टाक्षरञ्चेति विभावयिष्यन्ति मनीषिणः। अस्य कर्गलमुद्रणाकारादयोऽप्यध्येतॄणां स्वान्तमाह्लादयिष्यन्तीति मतिर्मम।

भाष्यस्य टीकयोश्च पार्थक्येन प्रकाशनं तत्र च विभिन्नाकाराक्षराणां सन्निवेशः सौविध्याय स्यादध्येतॄणाम्। सर्वाणि भाष्यवार्तिकानि सूत्रवत् पृथगेव मुद्रितानि। प्रत्येकमूत्रस्थवार्तिकानां सङ्ख्या निर्दिष्टा, सूत्रवार्तिकयोः पार्थक्यप्रतिपादनाय च सूत्रस्याग्रेतज्ज्ञापिकाऽध्यायपादसूत्रसङ्ख्या लिखिता, वार्तिके तु सङ्ख्यैव केवला। भाष्ये तत्र तत्रोदाहरणत्वेन प्रदत्तमन्त्राणां मन्त्रप्रतीकानां च सस्वरं मुद्रणं तत्स्थलनिर्देशश्चापि कृतः। स्थाने स्थाने च कार्यविधायकसूत्राणां सूत्रस्थवार्तिकानां वा सङ्ख्याऽधस्ताट्टिप्पणीषु निर्दिष्टा येनाध्ययनार्थी सत्वरं विजानीयादनेन सूत्रेण वार्तिकेन वेहेदं कार्यं विधीयत इति। क्वचिच्च टिप्पण्योऽपि कृताः सुखप्रतिपत्त्यर्थं सिद्धान्तप्रतिपादनार्थं पाठान्तरं वा प्रकटयितुम्।

## आधारग्रन्थाः

अस्य प्रस्तुतसंस्करणस्य सम्पादनार्थं यानि भाष्यसंस्करणानि मया प्रयुक्तानि तानीहाऽऽभारप्रदर्शनपुरस्सरं निर्दिश्यन्ते—

१—व्याकरणमहाभाष्यम् ( सम्पूर्णम् ) प्रदीपोद्द्योतसहितम्, श्रीगुरुप्रसादशास्त्रिसम्पादितम् ( काशी )।

२—व्याकरणमहाभाष्यम् ( सम्पूर्णम् ) सप्रदीपम्, श्रीपण्डितकृपारामशर्मप्रकाशितम् ( काशी )।

३—व्याकरणमहाभाष्यम् ( सम्पूर्णम् ) मूलमात्रम्, एफ० कीलहार्नसम्पादितं द्वितीयं संस्करणम् ( पूना )।

४—व्याकरणमहाभाष्यम् ( अध्यायद्वयात्मकम् ) उपरिलिखितस्यैव तृतीयं संस्करणं, काशिनाथटिप्पणीयुतम्।

५—व्याकरणमहाभाष्यम् ( सम्पूर्णम् ) श्रीवासुदेवशास्त्री अभ्यंकरकृतमराठी—भाषान्तरसहितम् ( पूना )।

६—व्याकरणमहाभाष्यम् ( षडध्यायात्मकम् ) प्रदीपोद्द्योतसहितम्, निर्णयसागरीयम् (बम्बई)।

७—व्याकरणमहाभाष्यम् ( अङ्गाधिकारमात्रम् ) प्रदीपोद्द्योतसहितम्, आनन्दाश्रमपूनाप्रकाशितम् ।

८—व्याकरणमहाभाष्यम् ( नवाह्निकमात्रम् ) प्रदीप—उद्द्योतनसहितम्, प्रो० पी० पी० एस० शास्त्रिसम्पादितम् ( मद्रास ) ।

९—व्याकरणमहाभाष्यम् ( नवाह्निकमात्रम् ) प्रदीप-उद्द्योत-तत्त्वालोकसहितम्, चौखम्बा-प्रकाशनम् ( वाराणसी ) ।

१०—लेक्चर्स् ओन पतञ्जलिज् महाभाष्य ( सार्द्धद्वयाध्यायात्मकम् ) पी० एस० सुब्रह्मण्यशास्त्रिकृताङ्गलभाषानुवादसहितम् ( तिरुचिरापल्ली ) ।

११—व्याकरणमहाभाष्यम् ( १—४ आह्निकमात्रम् ) काशीनाथ वासुदेव अभ्यंकरकृतहिन्दीभाषान्तरसहितम् ( पूना ) ।

१२—व्याकरणमहाभाष्यम् ( पस्पशाह्निकमात्रम् ) क्षितीशचन्द्र चटर्जीकृताङ्गलभाषान्तरसहितम् ( कलकत्ता ) ।

## पाणिनीयसूत्राणां परिगणन-तालिका ( महाभाष्यानुसारिणी )

| अध्यायाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | सर्वसूत्रयोगः |
|---|---|---|---|---|---|---|---|---|---|
| १ पादे सूत्राणि | ७४ | ७१ | १५० | १७६ | १३५ | २१७ | १०३ | ७४ | अथ शब्दानुशासनम् १ |
| २ पादे सूत्राणि | ७३ | ३८ | १८८ | १४४ | १४० | १९८ | ११८ | १०८ | प्रत्याहारसूत्राणि १४ |
| ३ पादे सूत्राणि | ९३ | ७३ | १७६ | १६५ | ११९ | १३८ | ११९ | ११९ | एतेषां योगः ३९६३ |
| ४ पादे सूत्राणि | १०६ | ८५ | ११७ | १४४ | १६० | १७५ | ९७ | ६७ | ३९७८ |
| सूत्रयोगः | ३४६ | २६७ | ६३१ | ६२९ | ५५४ | ७२८ | ४३७ | ३६८ +१५ = | ३९७८ |

पाणिनीयशब्दानुशासनेऽष्टावध्यायाः, ३२ पादाः, ३९७८ सूत्राणि च विद्यन्ते । अस्मदीये भाष्यसंस्करणेऽपिसूत्राणि त्वेतावन्त्येव सन्ति । नानामुद्रितसूत्रपाठेषु काशिकादिवृत्तिग्रन्थेषु चाष्टौ सूत्राणि विभज्य द्विधा सङ्ख्यायन्ते, द्वे च वार्तिके सम्मिलिते वर्तेते । बहुषु भाष्यसंस्करणेष्वेतेषां सूत्राणां पुरतो द्वे सङ्ख्ये मुद्रिते दृश्येते । टिप्पणीप्रदत्तसूत्रसङ्ख्यासु मा भूद् विपर्यय इति कृत्वा मयाऽपि तथैव सङ्ख्या लिखिता भाष्यस्थसूत्रेषु । तानि चेमान्यष्टौ सूत्राणि द्वे च वार्तिके—

१—उञ ऊँ ॥ १ । १ । १७—१८ ॥

२—प्रादय उपसर्गाः क्रियायोगे ॥ १ । ४ । ५८—५९ ॥

३—विभाषाऽपपरिबहिरञ्चवः पञ्चम्या ॥ २ । १ । ११—१२ ॥

१ कलेर्ढक् ॥ ४ । २ । ८ ॥ वार्तिकखण्डोऽयम् ।
४ सञ्ज्ञायां कुलालादिभ्यो वुञ् ॥ ४ । ३ । ११७—११८ ॥
२ द्वित्रिपूर्वादण् च ॥ ५ । १ । ३६ ॥ वार्तिकमेतत् ।
५—ह्वः सम्प्रसारणमभ्यस्तस्य च ॥ ६ । १ । ३२—३३ ॥
६—उदाराश्वेषुषु क्षेपे ॥ ६ । २ । १०७—१०८ ॥
७—औदच्च घेः ॥ ७ । ३ । ११८—११९ ॥
८—अनितेरन्तः ॥ ८ । ४ । १९—२० ॥

त्रीणीमान्यपि सूत्राणि केचन समुदितान्यधीयते—

१—अदोऽनन्ने क्रव्ये च ॥ ३ । २ । ६८—६९ ॥
२—तदस्य परिमाणं सङ्ख्यायाः सञ्ज्ञासङ्घसूत्राध्ययनेषु ॥ ५ । १ । ५७—५८ ॥
३—वैयाकरणाख्याया चतुर्थ्याः परस्य च ॥ ६ । ३ । ६—७ ॥

## महाभाष्यस्थाह्निकानां व्याख्यातसूत्राणां च तालिका

| | १ अध्याये | | २ अध्याये | | ३ अध्याये | | ४ अध्याये | | ५ अध्याये | | ६ अध्याये | | ७ अध्याये | | ८ अध्याये | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| पादे | आ. | व्या.सू. | आ. | व्या.सू. | आ. | व्या.सू. | आ. | व्या.सू. | आ. | व्या.सू. | आ. | व्या.सू. | आ. | व्या.सू. | आ. | व्या.सू. |
| १ | ९ | ६८ | ३ | ४६ | ६ | ८९ | ४ | ८६ | २ | ६० | ६ | १२५ | २ | ५३ | २ | ३२ |
| २ | ३ | ५३ | २ | २६ | ३ | ६४ | २ | ५७ | २ | ६२ | २ | ३८ | २ | ५८ | २ | ५४ |
| ३ | २ | ४२ | ३ | ४३ | २ | ५८ | २ | ४९ | २ | ४९ | ३ | ६५ | २ | ४९ | २ | ५३ |
| ४ | ४ | ५७ | २ | ४४ | १ | २९ | १ | २० | १ | ३७ | ४ | ७१ | १ | ३२ | १ | ३५ |
| यो. | १८ | २२० | १० | १५९ | १२ | २४० | ९ | २० | ७ | २०८ | १५ | २९९ | ७ | १९२ | ७ | १७४ |

अष्टाध्यायेषु १७०१ सूत्राण्येकं चाथशब्दानुशासनमष्ट च प्रत्याहारसूत्राणीति सर्वाणि १७१० सूत्राणि व्याचष्टे पतञ्जलिर्भाष्ये । कृत्स्नस्य च भाष्यस्य पतञ्जलिना ८५ उपविभागाः कृताः । ते चेहाह्निकसञ्ज्ञया प्रसिद्धाः । यदि चेदह्ना निर्वृत्तमाह्निकं तर्हि पञ्चाशीत्यहःसु भाष्यमिदं चकार पतञ्जलिः । अथ चेदाह्निकशब्देनाऽयमर्थोऽभिप्रेतो यत् कुशाग्रबुद्धीन् छात्रानेकस्मिन्नह्नि प्रतिभासम्पन्नो गुरुर्यमेकं प्रकरणं पाठयेत्तस्याह्निकसञ्ज्ञा ( अह्नापाठ्यमाह्निकम् ) तर्हि ८५ दिवसेष्वाद्योपान्तं भाष्यं पठनीयं पाठनीयं च विद्याव्रतपरायणैरन्तेवासिभिर्गुरुभिश्च । आह्निकशब्दस्यास्मिन्नर्थे प्रयोगस्तु महाभाष्ये गोतमप्रणीते न्यायदर्शने कणादप्रणीते च वैशेषिकदर्शने दृष्टो नान्यत्र ।

## महाभाष्यस्य त्रिधा लोपः

अद्यावधि भाष्यमिदं त्रिधा विलुप्तप्रायं सञ्जातमिति वाक्यपदीयराजतरङ्गिण्यादिभिर्विज्ञायते । प्रथमोऽस्य समुद्धर्त्ता चन्द्राचार्यः, तद्यथाह वाक्यपदीये भर्तृहरिः—

बैजिसौभवहर्यचैः शुष्कतर्कानुसारिभिः ।
आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके ॥ ४८७ ॥
यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः ।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ॥ ४८८ ॥
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ॥ ४८९ ॥

( वाक्यपदीये द्वितीयकाण्डे )

द्वितीये विच्छेदेऽस्य ग्रन्थरत्नस्य प्रचारः कश्मीरनृपतिना जयापीडेन क्षीरादि-पण्डितैः कारित इत्यवबुध्यते राजतरङ्गिण्या—

देशान्तरादागमय्याथ व्याचक्षाणान् क्षमापतिः ।
प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ॥ ४८८ ॥
क्षीराभिधानाच्छब्दविद्योपाध्यायात् संभृतश्रुतः ।
बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ॥ ४८९ ॥

( राजतरङ्गिण्यां चतुर्थे तरङ्गे )

तृतीये विलोपे महाभाष्यस्य समुद्धारकौ प्रचारकौ च गुरुवरविरजानन्दमहर्षिदयानन्दाविति विस्तरेण युधिष्ठिरमीमांसककृते "संस्कृतव्याकरणशास्त्र का इतिहास" पुस्तके द्रष्टव्यम् । महाभाष्यस्य बहुधा विलोपान्नानास्थलेषु पाठः त्रुटित इव प्रतीयते । विश्रृङ्खलितपाठनिर्देशस्तु मया यथास्थानं टिप्पण्यां करिष्यते । यत्र च सन्देहो भवति तत्र "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण" मित्येव सुगमः पन्थाः । तथा चाह भाष्यकारः—"इङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रनिबन्धनेनाचार्याणामभिप्रायो लक्ष्यते" [ न मुने ८ । २ । ३ ]।

समग्रस्य महाभाष्यस्य सम्पादनकर्मणि ये सन्ति साहाय्यकृतो गुरवः सुहृदश्छात्राश्च ते सर्वेऽपि सन्ति कीर्तिभाजः । विशुद्धमुद्रणाय च मुद्रणालयाधिकारिणः कर्मचारिणश्चाप्यर्हन्ति धन्यवादं येषां सहयोगेन मनोहारीदं संस्करणं समपद्यत ।

सर्वथा सुन्दरसम्पादनाय घटमानेनापि मयाऽल्पज्ञत्वाद् दृष्टिदोषान्मुद्रणकालेऽक्षरभ्रंशात् साधनाऽभावाद्वा ये कृताः प्रमादास्तान् क्षममाणा वैयाकरणमूर्द्धन्या मां सूचयिष्यन्त्यथ चास्यार्षग्रन्थस्याऽध्यापने प्रचारे च साहाय्यभाजो भविष्यन्ति गुणैकगृह्या इत्यभ्यर्थ्यते—

विदुषां वशंवदो
वेदव्रतो व्याकरणाचार्यः

गुरुकुल झज्जर ( रोहतक )
श्रावणी २०१९ वि०
१५ अगस्त १९६२ ई०

❀ ओ३म् ❀

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरणमहाभाष्यम्

—:०:—

## ॥ अथ शब्दानुशासनम् ॥

अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते । शब्दानुशासनं नाम

---

### श्रीकैयटकृतः प्रदीपः

सर्वाकारं निराकारं विश्वाध्यक्षमतीन्द्रियम् । सदसद्रूपताऽतीतमदृश्यं माययावृतैः ॥१॥
ज्ञानलोचनसंप्रेक्ष्यं नारायणमजं विभुम् । प्रणम्य परमात्मानं सर्वविद्याविधायिनम् ॥२॥
पुरुषाः प्रतिपद्यन्ते देवत्वं यदनुग्रहात् । सरस्वतीं च तां नत्वा सर्वविद्याधिदेवताम् ॥३॥
पदवाक्यप्रमाणानां पारं यातस्य धीमतः । गुरोर्महेश्वरस्यापि कृत्वा चरणवन्दनम् ॥४॥
महाभाष्यार्णवाऽवारपारीणं विवृतिप्लवम् । यथागमं विधास्येऽहं कैयटो जैयटात्मजः ॥५॥
भाष्याऽब्धिः क्वाऽतिगम्भीरः क्वाऽहं मन्दमतिस्ततः ।
छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम् ॥६॥
तथापि हरिबद्धेन सारेण ग्रन्थसेतुना । क्रममाणः शनैः पारं तस्य प्राप्ताऽस्मि पङ्गुवत् ॥७॥

---

### श्रीनागोजीभट्टकृत उद्द्योतः

नत्वा साम्बशिवं देवीं वागधिष्ठानिकां गुरून् । पाणिन्यादिमुनीन् वन्द्यान् पितरौ च सतीशिवौ ॥१॥
नागेशभट्टो नागेशभाषितार्थविचक्षणः । हरिदीक्षितपादाब्जसेवनावाप्तसन्मतिः ॥२॥
याचकानां कल्पतरोररिकक्षहुताशनात् । शृङ्गवेरपुराधीशरामतो लब्धजीविकः ॥३॥
नाऽविस्तीर्णं न विस्तीर्णं मध्यानामपि बोधकृत् । भाष्य-प्रदीप-व्याख्यानं कुर्वेऽहं तु यथामति ॥४॥

भाष्यं व्याचिकीर्षुः शिष्टाचारप्राप्तं मङ्गलं शिष्यशिक्षायै निबध्नाति-सर्वेति । क्त्वान्तानां पञ्चमश्लोकोत्तरार्धेनाऽन्वयः । सर्वाकारत्वं-सर्वोपादानकारणत्वान्मृदादिवत् । कार्यातिरिक्तदृश्यस्वरूपाऽभावात्—निराकारत्वम् । कर्तृत्वात्—विश्वाध्यक्षत्वम् । 'स ऐक्षते'ति श्रुतेः । अतीन्द्रियत्वं-विगतेन्द्रियत्वेन । 'पश्यत्यचक्षुः' इत्यादिश्रुतेः । सर्वप्रत्यक्षीकरणं तु स्वरूपचैतन्येनैव । इन्द्रियाऽविषयत्वेन वाऽतीन्द्रियत्वम् । सदसद्रूपता-प्रपञ्चधर्मः । एतच्च 'स्त्रिया'मिति सूत्रे वक्ष्यते । तामतीतं—तद्रहितमित्यर्थः । एवं च सदेवेति भावः । नन्वीदृशमस्माभिः कुतो न गृह्यत इत्यत आह—

शास्त्रमधिकृतं वेदितव्यम् ॥

**प्रदीपः**—भाष्यकारो विवरणकारत्वाद्व्याकरणस्य साक्षात्प्रयोजनमाह—**अथ शब्दानुशासनमिति**। प्रयोजनप्रयोजनानि तु **रक्षोहागमे**ति पश्चाद्वक्ष्यन्ते। स्ववाक्यं व्याख्यातुं तदवयवमथशब्दं तावद्व्याचष्टे—**अथेत्ययमिति**। इतिशब्दोऽथशब्दस्य स्वरूपेऽवस्थापनाय प्रयुक्तः। एवं हि पदान्तरैः **सामानाधिकरण्येन सम्बन्धी** सन्नथशब्दो व्याख्यातुं शक्यते। स्वरूपेऽवस्थितश्च सर्वनाम्ना परामृश्यते—**अयमिति**। **'शब्द' इति** स्वरूपकथनं विस्पष्टप्रतिपत्त्यर्थम्। **अधिकारार्थ इति**। अधिकारः प्रस्तावो द्योत्यत्वेनाऽस्य प्रयोजनमित्यर्थः। निपातानाञ्च द्योतकत्वं **वाक्यपदीये** निर्णीतम्।

**उद्द्योतः**—**अद्वयमित्यादि**। **मायया वृत'**मित्यस्य कृत्यमाह—**ज्ञानेति**। तत्त्वमस्यादिमहावाक्यजनिताऽखण्डाऽद्वितीयसच्चिदानन्दब्रह्माकारा वृत्तिर्ज्ञानं, तदेव लोचनं तेन संप्रेक्ष्यमित्यर्थः। **भारतीगणमित्यादि**। सर्वनरसमूहाऽन्तर्यामिणमित्यर्थः। **सर्वविद्याः**—वेदरूपाः, **तद्विधायिनम्**। वचनसन्दर्भविशेषरूपे ग्रन्थे समुचितत्वाद्वागधिदेवता नमति—**पुरुषा इति**। **वैदुष्यं**—पाण्डित्यम्। सम्प्रदायशुद्धिं द्योतयन् गुरुं नमति—**पदेति**। व्याकरणमीमांसातर्काणामित्यर्थः। **धीमतः**—ऊहाऽपोहकुशलस्य।

**महाभाष्येति**। व्याख्यातृत्वेऽप्यस्येष्ट्यादिकथनेनाऽन्वाख्यातृत्वादितरभाष्यवैलक्षण्येन महत्त्वम्। अवारपारयोर्भवम्। प्लूयतेऽनेनेति **प्लवं**—सेतुम्। **यथागमम्**। सम्प्रदायमनतिलङ्घ्येत्यर्थः।

**भाष्येति मयूरव्यंसकादिसमासो रूपकं** चेति बोध्यम्। **पिशुनत्वं**—दुष्टत्वम्।

नन्वेवं कथं प्रवृत्तिरत आह—**तथापीति**। तत्रत्यसारांश एवात्र निबद्ध इति भावः। **शनैरि**त्यनेनात्यन्तग्रन्थाऽसङ्कोचः। **पंगुवदि**त्यनेन व्याख्येयांशाऽपरित्यागो व्याख्यानस्याऽविस्तृतत्वं च बोध्यते।

यद्यपि पाणिनिना **'ब्राह्मणेन निष्कारण'** इत्यादिश्रुते: सन्ध्योपासनादाविव प्रत्यवायपरिहारार्थितयैवोत्तमाधिकारिप्रवृत्तिसंभवात्प्रयोजनं नोक्तम्। वार्तिककृताऽपि **'शास्त्रपूर्वके प्रयोगे धर्म'** इत्यनेन मध्यमाधिकारिणः परमप्रयोजनं दर्शितम्। भगवांस्तु विवरणकारत्वान्मन्दाधिकारिणा प्रवृत्तेः प्ररोचकप्रयोजनप्रतिपत्तिप्रवणत्वाद्व्यवहितेषु स्वर्गाऽपूर्वादिष्वनाश्वासात्साक्षात्प्रयोजनं शब्दव्युत्पत्तिलक्षणं वदतीत्याह—**भाष्यकार इति**। तत्र शब्दज्ञानरूपे प्रयोजने उक्ते विषयोऽप्युक्त एव। **शास्त्रजन्यज्ञानविषयस्यैव** शास्त्रविषयत्वादिति बोध्यम्। तज्जिज्ञासुरधिकारी, प्रतिपाद्यप्रतिपादकभावः सम्बन्ध **इति,—अर्थादेव** लब्धम्। ननु **कानि पुन**रित्यादिना प्रयोजनानि वक्ष्यति, तेन पौनरुक्त्यमत आह—**साक्षादिति**। तदेवाह—**प्रयोजनप्रयोजनानीति**। **व्याख्यातुमित्यस्य**,—'शब्दानुशासनमित्यादिने'ति शेषः। **तावत्**—प्रथमम्। **व्याचष्टे इति**। 'पदार्थज्ञानायाऽऽनन्तर्यार्थकत्वनिरासाय चे'ति शेषः। भाष्यत्वादेव च स्ववाक्यव्याख्यानमिति भावः। नन्विति विनाऽप्यथशब्दोऽधिकारार्थ इत्येवोच्यतामत आह—**एवं हीति**। **पदान्तरैः**—शब्दपदमधिकारार्थपरं प्रयुज्यत इतिपदैः। **व्याख्यातुमिति**। 'अधिकारार्थत्वेने'ति शेषः। **'अथेतिशब्दोऽधिकारार्थ'** इत्युक्ते आनन्तर्यार्थकत्वमप्रमाणमिति भ्राम्येदतो**ऽयमिति** भाष्ये। योऽयमस्मिन् वाक्ये स इत्यर्थः। **विस्पष्टेति**। न वेतीत्यादावर्थपरताया दर्शनेन तथा भ्रमं निवर्तयितुमित्यर्थः। ननु निपातानां द्योतकत्वादभिधेयवाच्यर्थशब्दोऽनुपपन्नोऽत आह—**अधिकार इति**। **प्रस्ताव इति**। आरम्भ इत्यर्थः। स चार्थाद्व्याख्यायमानस्य। **अर्थशब्दः** प्रयोजनवाचीति भावः।

केषां शब्दानाम् । लौकिकानां वैदिकानां च । तत्र लौकिकास्तावत् ।

प्रदीपः—अथशब्दस्याऽधिकारार्थत्वे यो वाक्यार्थः संपद्यते तं दर्शयति-शब्दानुशासनमिति । अनेकक्रियाविषयस्यापि शब्दानुशासनस्य प्रारभ्यमाणताऽथशब्दसन्निधानेन प्रतीयते । व्याकरणस्य चेदमन्वर्थं नाम—शब्दानुशासनमिति । अत्र चाऽऽचार्यस्य कर्तुः प्रयोजनाभावादनुपादानादुभयप्राप्त्यभावान्नोभयप्राप्तौ कर्मणीत्यनेन षष्ठी, अपि तु 'कर्तृकर्मणोः कृती'त्यनेनेति-'कर्मणि चे'ति समासप्रतिषेधाऽप्रसङ्गादिध्मप्रव्रश्चनादिवत्समासः ।

शब्दशब्दस्य सामान्यशब्दत्वाद्विना प्रकरणादिना विशेषेऽवस्थानाऽभावात्तन्त्री-

उद्द्योतः—निपातानां च द्योतकत्वमिति । निपातानां द्योतकत्वं चेत्यर्थः । उपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयस्वीकारस्याऽव्ययं विभक्तीतिसूत्रे भाष्ये स्पष्टत्वात् । उपसर्गाणां तु द्योतकत्वमेवेति स्पष्टं गतिर्गतावितिसूत्रे भाष्ये इति तत्रैव निरूपयिष्यामः । अत एव 'साक्षात्क्रियते गुरु'रित्यादि सङ्गच्छते । प्रारम्भक्रियाविषयत्वद्योतकस्यापि अथशब्दस्याऽर्थात् नीयमानदध्यादिवन्मङ्गलत्वमपीत्युभयार्थमथशब्दः प्रयुज्यत इति फलितम् । परे त्वत्र वाचकत्वमेवेच्छन्ति । अधिकृतमिति च तदर्थं वदन्ति । भाष्ये—प्रयुज्यत इत्यनेन । वर्तमाननिर्देशेन सर्वलोकसिद्धमस्याधिकारार्थत्वं न तु वृद्ध्यादिवत्पारिभाषिकमिति ध्वनितम् । ननु विवरणेऽधिकृतमित्यधिकं, वाचकपदाभावात्, द्योतकतानुपपत्तिश्चेत्यत आह—अनेकेति । 'उच्यते' 'श्रूयते' 'क्रियते' इति । प्रतीयत इति । एतावतैव द्योतकत्वमिति भावः ॥

ननु भावसाधनस्यानुशासनपदस्य शास्त्रपदेन सामानाधिकरण्यमनुपपन्नमत आह-व्याकरणस्य चेति । अन्वर्थत्वात्प्रयोजनाभिधानोपपत्तिः । अनुशिष्यन्तेऽसाधुशब्देभ्यो विविच्य ज्ञाप्यन्तेऽनेनेति करणल्युडन्ततया 'शास्त्र'पदेन सामानाधिकरण्यमिति भावः । इदमेव ध्वनयितुं भाष्ये 'नाम'पदोपादानम् । नामनामिनोरभेदाध्यवसायमिति सामानाधिकरण्यम् । अनेनैवाऽपभ्रंशानामविषयत्वं सूचितं, ध्वनीनां च । केषामिति प्रश्नस्तु 'किं लौकिकमात्रविषयं शाकटायनादिशास्त्रमधिकृतम्, उत वैदिकमात्रविषयं प्रातिशाख्यम्' इतीति परे । ननु कर्मणि चेति निषेधात्कथं कर्मषष्ठ्यन्तेन समासोऽत आह—अत्र चाचार्यस्येति । उभयोरुपादान एवोभयप्राप्तिरि'त्यासमासे' इति सूत्रे भाष्ये स्पष्टम् ॥

कर्तृकर्मणोरिति षष्ठ्यामपि समासनिषेधः कुतो नेत्यत आह—इध्मेति । अस्येत्यर्थकतया कर्मणीत्युच्चार्य विहितषष्ठ्या एव समासनिषेध इति भावः ।

भाष्ये—'शास्त्र'मित्यस्य 'कर्तव्यत्वेने'ति शेषः । विवरणकारत्वाद्वा व्याख्यातव्यत्वेनेति शेष उचित इत्यन्ये । शास्त्रत्वं चास्य साधुत्वरूपैकप्रयोजनसम्बद्धत्वाद्बोध्यम् ।

सामान्यशब्दत्वादिति । लोकव्यवहारे ध्वनावपभ्रंशे च 'शब्द'शब्दप्रयोगादिति भावः । एतेन 'ध्वनिर्व्यंग्य एव तपरसूत्रादौ शब्दशब्दप्रयोगादिदं चिन्त्य'मित्यपास्तम् । ननु 'व्रीहीन् प्रोक्षती'त्यादौ सामान्यशब्दस्याऽप्यपूर्वीयेषु विशेषेषु प्रवृत्तिवद्वाचके साधौ तद्विशेषे प्रवृत्तिर्भविष्यतीत्यत आह—विनेति । व्रीहिशब्दस्य तु प्रकरणाद्विशेषे प्रवृत्तिरिति भावः । बालिशादीनामित्यादिनाऽपभ्रंशसंग्रहः । ननूत्तरपदार्थसंसृष्टपूर्वपदार्थस्य कथं सर्वनाम्ना परामर्शोऽत आह—उत्तरपदार्थान्तर्गतस्येति । ततः पूर्वमुपस्थितत्वविषयस्येत्यर्थः । बुद्ध्या—मानस्या । यद्वा वाक्यजन्यबुद्ध्या ।

गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति । वैदिकाः खल्वपि । शं नो देवीरभिष्टये * (अथ. सं. १।१।१) इषे त्वोर्जे त्वा । (यजु. सं. १।१।१) अग्निमीळे पुरोहितम् । (ऋ. सं. १।१।१) अग्न आ याहि वीतये (साम. सं. १।१।१) इति ॥

---

**प्रदीपः**—शब्दकाकवाशितादीनामप्यनुशासनप्रसङ्ग इति मत्वा पृच्छति—**केषामिति** । उत्तरपदार्थान्तर्गतस्यापि पूर्वपदार्थस्य बुद्ध्या प्रविभागात्किमा प्रत्यवमर्शः । यथा 'राजपुरुष' इत्युक्ते 'कस्य राज्ञः ?' इति ।

सिद्धान्तवादी तु व्याकरणस्य वेदाङ्गत्वात्सामर्थ्याद्विशेषावगतिरिति मत्वाह—**लौकिकानामिति** । लोके विदिता इति,—**लोकसर्वलोकाट्ठञ्** । अथ वा भवार्थेऽध्यात्मादित्वाट्ठञ् । एवं वेदे भवा वैदिकाः । वैदिकानां लौकिकत्वेऽपि प्राधान्यख्यापनाय पृथगुपादानम् । यथा—**ब्राह्मणा आयाता वसिष्ठोऽप्यायात** इति वसिष्ठस्य । तेषां तु प्राधान्यं यत्नेनाऽपभ्रंशपरिहारात् । अथ वा भाषाशब्दानामेव लौकिकत्वमिति भेदेन निर्देशः । तत्र लोके पदानुपूर्वीनियमाभावात्पदान्येव दर्शयति—**गौरश्व इति** । वेदे त्वानुपूर्वीनियमाद्वाक्यान्युदाहरति—**शं न इति** ।

---

**उद्द्योतः**—**वेदाङ्गत्वादिति** । तत्त्वं चाऽऽगमसिद्धम् । अनेन तन्त्रीशब्दादीनामविषयता सूचिता । न च वेदाङ्गत्वाद्वैदिका एव विषयाः स्युः । तत्र—तत्र **'भाषायां'** **'छन्दसी'**त्याद्युक्त्योभयोरपि विषयत्वात् । ननु चिदानन्दस्वरूपब्रह्मातिरिक्तस्य सर्वस्य लोकपदार्थत्वाद्वेदस्यापि लोकान्तर्गतत्वादभेदेनाभिधान न युज्यत इत्यत आह—**वैदिकानामिति** । वैदिकानां लौकिकत्वेपी'ति पाठः । **तेषां त्विति** । लौकिकानां याज्ञे कर्मण्येव तत्परिहारः, तेषां तु सर्वत्रेति भावः । **भाषाशब्दानामिति** । भाषा—प्रयोज्यप्रयोजकवृद्धव्यवहारः, तत्र प्रयुज्यमानानामित्यर्थः । एवं च वेदमात्रान्तर्गत—**कर्णेभिर्देवासो** गृभ्णामीत्याद्यतिरिक्तपरता लौकिकशब्दस्य, तैस्तद्व्यवहाराऽदर्शनात् । अत एव 'गौरश्व' इत्यादीनां लौकिकोदाहरणत्वसंगतिः । लोके स्वरानादराद्वेदे तदादराच्च स्वरविशिष्टानां वेदमात्रविषयतामभिप्रेत्य 'शं न' इत्यादीनां वैदिकोदाहरणत्वसंगतिरिति भावः । लोके पदानामुदाहरणत्वोक्तौ वेदे वाक्यानामेव तत्त्वोक्तावाशयमाह—**तत्रेति** । पदान्तरसमभिव्याहारेण स्वरविशेषाच्च वेदे वाक्यानामुदाहरणत्वोक्तिरित्यपि बोध्यम् । 'लोकवेदसाधारणतया पाणिनीयशब्दानुशासनस्यैवाऽत्राधिकृतत्वम्, न तु शाकटायनादिव्याकरणस्ये'त्युत्तराशयं परे । भाष्ये—**लौकिकास्तावदिति** । तावच्छब्दोऽनुक्रमे । पूर्वं लौकिका उदाह्रियन्ते, पश्चाद्वैदिका इत्यर्थः । वैदिकानां प्रधानत्वेऽपि लौकिकानां पूर्वनिर्देशस्तद्वदादरसूचनार्थः ।

---

* विमर्शः—सुप्रसिद्धाऽथर्ववेदसंहिता (शौनकशाखा) 'ये त्रिषप्ताः परियन्ति विश्वा' इत्यादि मन्त्रेण प्रारभ्यते । 'शं नो देवी'रित्यादिमन्त्रस्तु प्रथमकाण्डस्य षष्ठसूक्तस्यादौ पठ्यते । अथर्ववेदीयपैप्पलादशाखाप्रारम्भे 'शं नो देवी'रित्यादिमन्त्रः समुपलभ्यते । वैदिकशब्दोदाहरणेष्वस्य सर्वप्रथमोपादानं भाष्यकारस्याथर्ववेदित्वं पैप्पलादशाखाऽध्यायित्वं च सूचयति ।

**अथ गौरित्यत्र कः शब्दः ? किं यत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः । नेत्याह । द्रव्यं नाम तत् ॥**

**प्रदीपः**—अयं गौरयं शुक्ल इति शब्दार्थयोरभेदेन लोके व्यवहारदर्शनाच्छब्दस्वरूपनिर्धारणाय पृच्छति—**अथेति** । 'गौ'रिति विज्ञाने प्रतिभासमानेषु वस्तुषु कः शब्द इत्यर्थः ॥

तान्येव वस्तूनि क्रमेण निर्दिशति-**किं यत्तदिति** । 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददते' इति कामचारतः **स शब्द** इति पुंलिङ्गेन निर्देशः ।

**नेत्याहेति** । भिन्नेन्द्रियग्राह्यत्वान्न द्रव्यं शब्द इति प्रतीतम्, अपि तु द्रव्यमिति । यदि च द्रव्यानुशासनं विवक्षितमभविष्यत्—'**अथ द्रव्यानुशासन**' मित्येवाऽवक्ष्यत् ।

**उद्द्योतः**—**अभेदेन लोके इति** । अभेदेनैवेत्यर्थः । शब्दपरत्वाभिप्रायेणाऽस्य गौरिति प्रयोगाभावादिति भावः । पुरोवर्तिव्यक्तिं पश्यतो वाचकजिज्ञासया 'कोऽय'मिति प्रश्ने 'अयं गौः' अयं वर्णः शुक्ल' इत्युत्तरस्थले संनिहितमुद्दिश्य तादात्म्येन शब्दविधेयताप्रतीतेरिति तात्पर्यम् । शब्दार्थयोस्तादात्म्यमेव शक्तिः । स्पष्टं चेदं पातञ्जलभाष्ये इति **मञ्जूषायामस्माभिर्हर्यादिसंमततया** व्युत्पादितम् । अतएव जात्यादिव्यक्त्योरिव '**रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः**' इत्यादौ शब्दार्थयोरप्यऽभेदेन व्यवहारः ।

**अथ गौरिति** भाष्ये—'अथे'त्यस्य 'पृच्छ्यते' इति शेषः । किं पृच्छ्यते, तदाह—**गौरित्यत्रेत्यादि** । **कः शब्द इति** । कः शब्दशब्दाभिधेय इति प्रश्नः । **प्रतिभासमानेषु** । शब्दजातिव्यक्त्यादिषु । नन्वेवं गुणक्रिययोः शब्दत्वाऽऽशङ्काऽनुपपन्ना, नहि ते ऽपि गौरितिशब्दजन्यबोधे भासेते इति चेन्न; गुणगुणिनोः क्रियाक्रियावतोश्चाऽभेदात् । शब्दार्थयोश्च तत्त्वात् । **तदभिन्नाभिन्नस्येति** न्यायेन तच्छङ्कोपपत्तेः । यथा परमकारणाऽभिन्नकार्यकारणकस्य परमकारणेनाऽप्यभेदः । यद्वा **गुणसमूहो द्रव्यमिति** पक्षे **तस्य भाव** इति सूत्रस्थभाष्यसम्मते समूहस्य गोशब्दवाच्यत्वेऽवयवभूतगुणादीनामपि तद्वाच्यत्वमिति शङ्का बोध्या । **अत्र गौरिति विज्ञाने** इति सामान्योक्त्या तदाकारप्रत्यक्षादिज्ञानेपि गुणादीनां सामान्यरूपेण भानम् । अत एव प्रत्यक्षदृष्टेऽपि आम्रफलादौ रसविशेषादिजिज्ञासा, विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वादित्यन्ये । निरूपितं चैतन्मञ्जूषायाम् ।

'**यत्त**'दिति समुदायो यद्वृत्तार्थे वर्तते, तस्यैव पुनस्तद्वृत्तेन 'स' इत्यनेन परामर्शः । यद्वा प्रसिद्धौ । **ननु** यदित्यस्य नपुंसकत्वेन तच्छब्देपि नपुंसकलिङ्गमेवोचितमत आह—**उद्दिश्यमानेति** । सिद्धवत्कीर्तनमुद्देशः । प्रतिपाद्यतया विधेयतया वा कीर्तनं—**प्रतिनिर्देशः** । यथा 'शैत्यं हि यत्सा प्रकृतिर्जलस्ये' त्यादौ स्त्रीलिङ्गनिर्देशः । **तल्लिङ्गमिति** । तयोर्लिङ्गमित्यर्थः ।

भाष्योक्तहेतुमुपपादयति—**भिन्नेन्द्रियेति** । सामान्यव्यतिरिक्तत्वे सति श्रोत्रेन्द्रियग्राह्यत्वं हि शब्दलक्षणमिति भावः । **यदि च द्रव्येति** । यदि द्रव्यं शब्दशब्दाभिधेयं स्यादित्यर्थः । तथा हि सति द्रव्यादीनां तन्त्रान्तरे निरूपितत्वात्तस्य वैयर्थ्यापत्तिरित्यपि बोध्यम् । तत्र द्रव्यस्य क्रियाद्याश्रयत्वात्पूर्वमुक्तिः । क्रियागुणौ च जात्याश्रयाविति तयोस्ततः पूर्वमुक्तिः । वैशेषिकसिद्धगुणानामपि संयोगविभागादीनां क्रियात्वं ध्वनयितुं गुणात्प्राक् क्रियोक्तिरिति ध्येयम् । **यत्तर्हि शुक्ल** इत्यादौ गुणस्य शब्दत्वशङ्कापरे वाक्ये 'इति'शब्देन प्रकारार्थेन सुरभ्यादिभेदभिन्नगन्धादिलिङ्गसङ्ख्यादिरूपगुणसंग्रह इति न न्यूनता ।

यत्तर्हि तदिङ्गितं चेष्टितं निमिषितं स शब्दः । नेत्याह । क्रिया नाम सा ।। यत्तर्हि तच्छुक्लो नीलः कृष्णः कपिलः कपोत इति स शब्दः । नेत्याह । गुणो नाम सः ।। यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः । नेत्याह । आकृतिर्नाम सा ।।

प्रदीपः— अनेनैव न्यायेन गुणक्रियासामान्यानां निराकृतेऽपि शब्दत्वे, प्रपञ्चार्थं तन्त्रोक्तपूर्वकं निराकरोति—यत्तर्हीति । गोशब्दार्थे चैषां संभवाच्छब्दत्वमाशङ्क्यते । परिहारस्तु पूर्ववत् ।

तत्र—इङ्गितम्—अभिप्रायस्य सूचकः शरीरव्यापारः । चेष्टितं—कायपरिस्पन्दः । निमिषितम्—अक्षिव्यापारः ।

शुक्लो नील इति । द्रव्यस्य प्रागुपन्यासाद्गुणमात्राभिधायिनोऽत्र शुक्लादयो द्रष्टव्याः ।।

भिन्नेष्वभिन्नमिति । अनेन सामान्यस्यैकत्वं कथ्यते, छिन्नेष्वच्छिन्नमित्यनेन तु नित्यत्वम् । सामान्यभूतमिति,—सत्ताख्यं महासामान्यं गोत्वादेः सामान्यविशेषस्योपमानं निर्दिष्टम् । सामान्यमिव सामान्यभूतम् । भूतशब्द उपमार्थे । यथा—पितृभूत इति ।

उद्द्योतः—ननु शब्दस्यापि गुणत्वाद्गुणो नाम स इत्युत्तरमसङ्गतम्, तस्य द्रव्यत्वे द्रव्यं नाम तदित्युत्तराऽसंगतिरिति चेन्न; उक्तद्रव्याश्रितो गुणो नाम स इत्यर्थात् ।।

श्रोत्राऽग्राह्यत्वादेव क्रियादीनां शब्दत्वे निरस्ते किमुत्तरग्रन्थेनेत्यत आह—अनेनैवेति । गोशब्दार्थे चैषां संभवादिति । अभेदसम्भवात् । तेन तदभिन्नाऽभिन्नस्य तदभिन्नत्वमिति न्यायेन शब्दत्वाशङ्का तेषामिति भावः । यद्वा गोशब्दार्थे— गुणसमूहे समूहितया एषां सम्भवादित्यर्थः । शरीरव्यापारो—रोमाञ्चादिः ।

एकत्वमिति । अनेकसमवेतत्वस्याऽप्युपलक्षणम् । नित्यत्वेन संयोगनिरासः । एकत्वेन प्रत्यभिज्ञाप्रत्यक्षरूपं प्रमाणं दर्शितम् । भूतशब्दप्रयोगानुपपत्तिं परिहरति—सत्ताख्यमिति । एवं हि 'वृद्धवदात्र' इत्याद्यापत्ते, सामान्यश्रुतेः सर्वसामान्यविषयत्वेन प्रवृत्तायाः सङ्कोचे कारणाभावाच्च, उपमाकथनस्य प्रकृतेऽनुपयोगाच्च, अध्याहारे गौरवाच्च—नेद युक्तम् । किं तु स्वरूपवाची सः । वृद्धिसंज्ञासूत्रस्थभाष्यप्रयोगस्य 'प्रमाणभूत' इत्यस्य स्वयं करिष्यमाणव्याख्यानरीत्याऽस्यापि व्याख्यानसम्भवात् । 'पितृभूत' इत्यत्राप्यन्यत्रान्यशब्दप्रयोगः सादृश्यपर इति सादृश्यप्रतीतिर्न त्वस्य सादृश्यवाचकत्वे मानमस्तीति दिक् ।

भाष्ये—आकृतिर्जातिः संस्थानं च, आक्रियते व्यवच्छिद्यते स्वाश्रयोऽनयेति व्युत्पत्तेरिति भावः । शङ्कापरभाष्ये सामान्यभूतमित्यस्य तद्व्यञ्जकं चेत्यप्यर्थो बोध्यः । जातिमात्रपरत्वं 'जात्याकृतिव्यक्तयः पदार्थः' इति गौतमसूत्रेण तस्यापि पदार्थत्वबोधनात्, प्रत्यक्षादौ तद्भानाच्च, तस्य शब्दत्वाशङ्कातत्समाधानाभावेन न्यूनता स्यात् । सिद्धे शब्दार्थेति वार्तिकव्याख्याने भाष्ये तस्यापि पदार्थत्वम् । नित्यत्वं च कैयटो वक्ष्यति । तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायस्तु यत्र स्वाऽभिन्नद्वारकः स्वस्वरूपानुगमस्तद्विषयः । यथा परमकारणकार्योपादानके परमकारणाऽभेदः । अत एव सुखदुःखयोर्नैक्यम्, नापि कुण्डलकटकयोस्तत् । कुण्डलारम्भकस्वर्णावयवानुगमस्य कटकेऽभावात् । एवं गुणसमूहस्यानुद्भूतावयवभेदस्य वाच्यत्वेपि समूहिनां तत्तद्रूपेणाऽवाच्यत्वान्न तेषां शब्दत्वाशङ्केति भावः ।

कस्तर्हि शब्दः ? येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः ॥ अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते । तद्यथा । शब्दं कुरु । मा शब्दं कार्षीः । शब्दकार्ययं माणवक इति । ध्वनिं कुर्वन्नेवमुच्यते । तस्माद्ध्वनिः शब्दः ॥

---

प्रदीपः—द्रव्यादिषु निरस्तेषु पृच्छति—कस्तर्हीति ।

उत्तरमाह—येनोच्चारितेनेति । वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति, वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गात्, आनर्थक्ये तु प्रत्येकमुत्पत्तिपक्षे यौगपद्येनोत्पत्त्यभावात्, अभिव्यक्तिपक्षे तु क्रमेणैवाभिव्यक्त्या समुदायाभावादेकस्मृत्युपारूढानां वाचकत्वे 'सरो' 'रस' इत्यादावर्थप्रतिपत्त्यविशेषप्रसङ्गात्तद्व्यतिरिक्तः स्फोटो नादाभिव्यङ्ग्यो वाचको विस्तरेण वाक्यपदीये व्यवस्थापितः । उच्चारितेन । प्रकाशितेनेत्यर्थः ।

अथवेति । अन्यत्र ध्वनिस्फोटयोर्भेदस्य व्यवस्थापितत्वादिहाऽभेदेन व्यवहारेपि न दोषः, 'द्रव्यादयो न शब्दशब्दवाच्या' इत्यत्र तात्पर्यात् । ध्वनिं कुर्वन्निति । विधिप्रतिषेधयोरप्रवृत्तविषयत्वात्कथमस्य त्रिभिः सम्बन्धः ? उच्यते—शब्दं कुर्वन्नपि 'शब्दं कुर्वि'त्युच्यते,—विरामाऽऽशङ्कायां तन्निवृत्तये । तथाऽनभिमतशब्दश्रवणोद्विजितेनोच्यते—'मा शब्दं कार्षी'रिति ।

---

उद्द्योत.—पृच्छतीति । प्रश्नविषयविशेषान्तराभावात्सामान्यरूपेण पृच्छतीत्यर्थः ।

भाष्ये-उच्चारितेनेति । शारीरमारुताभिहतकण्ठादिस्थानैः साक्षादवयवद्वारा वाऽभिव्यक्तेन येनेत्यर्थः । अत्र विषाणान्तैरवयवैर्गुणावयोप्युपलक्ष्यन्ते । संप्रत्ययो-ज्ञानम् ।

ननु प्रत्यायकशब्दस्य वर्णसमूहरूपतया येनेत्येकवचनमयुक्तम् । न च 'वन'मितिवत्समूहाभिप्राय तत्; समूहस्य स्थिरस्य निरूपयितुमशक्यत्वादत आह—वैयाकरणा इति । वर्णव्यतिरिक्तपदानभ्युपगमे एकैकस्य वर्णस्यवाचकत्व, समुदायस्य वा ? नाद्य इत्याह—वर्णानां प्रत्येकमिति । द्वितीयमनूद्य दूषयति—आनर्थक्ये तु प्रत्येकमिति । 'प्रत्येकमानर्थक्ये तु समुदायस्य वाचकत्वमुपेयम्, तत्तु न युक्तम्' इति शेषः । यतस्तत्र नयद्वयम्—उत्पद्यमानसमुदायस्याभिव्यज्यमानसमुदायस्य वा वाचकत्वमिति । तत्राद्यं दूषयति—उत्पत्तिपक्षे इति । 'उत्पत्त्यभावा'दित्यस्य समुदायाभावादित्यनेनान्वय. । द्वितीयं दूषयति—अभिव्यक्तीति । उत्पन्नाभिव्यक्तेर्ध्वंस्तत्वादित्यर्थः ।

ननु पक्षद्वयेपि पूर्वपूर्ववर्णानुभवजसंस्कारसहकृतान्त्यवर्णानुभवहेतुकैकस्मृत्युपारूढानां वाचकत्वमस्त्वत आह—एकस्मृतीति । ननु तस्य नित्यत्वे सर्वपदार्थप्रतीतिप्रसंगोऽत आह—नादेति । नादो वर्णः । ननु येन क्रमेणानुभूता वर्णास्तेनैव क्रमेणैकस्मृत्युपारूढानां वाचकत्वेन नार्थप्रतीत्यविशेषप्रसङ्गः, अन्यथा त्वयापि वर्णानां स्फोटव्यञ्जकत्वाभ्युपगमात् कथं पूर्वोक्तदोषान्निस्तारस्तवापीत्यत आह—विस्तरेणेति । इदमेकं पदमेकं वाक्यमिति प्रत्ययः स्फोटसत्त्वे तदैक्ये च प्रमाणम् । अनुभवक्रमेणैव स्मरणमित्यत्र दृढप्रमाणाभावाच्च । क्रमेणानुभूतानां व्युत्क्रमेणापि स्मरणदर्शनात् । मम तु यथा पटे नानारञ्जकद्रव्याहितनानावर्णोपरागः क्रमेण, तथा एकस्मिन्नेव तस्मिन्नुच्चारणक्रमेण क्रमवानेव तत्तद्वर्णस्वरूपानुरागः, स च स्थिरः, तस्य च मनसा ग्रहणमिति न दोषः ।

कानि पुनः शब्दानुशासनस्य प्रयोजनानि । रक्षोहागमलघ्वसंदेहाः प्रयोजनम् ।। रक्षार्थं वेदानामध्येयं व्याकरणम् । लोपागमवर्णविकारज्ञो हि सम्यग्वेदान्परिपालयिष्यति ।।

---

**प्रदीपः**—**कानि पुनरिति** । किं सन्ध्योपासनादिवद्व्याकरणाध्ययनं नित्यं कर्म अथ काम्यमिति प्रश्नः ।। पारम्पर्येण पुरुषार्थसाधनतामस्याह—**रक्षेति** । लोके लोपाद्यदृष्टं वेदे दृष्ट्वा भ्राम्येदवैयाकरणः, वैयाकरणस्तु न भ्रमति, वेदार्थं चाध्यवस्यति । तत्र **लोपागमयोरुदाहरणं**—'देवा अदुह्र'ति । दुहेर्लङो झस्याऽदादेशे कृते 'लोपस्त आत्मनेपदे'ष्विति तलोपः 'बहुलं छन्दसी'ति रुटि सति रूपमेतत् ।

**वर्णविकारो** यथा–'उद्ग्राभं च निग्राभं चे'ति । 'हृग्रहोर्भश्छन्दसि हस्येति वक्तव्य'मिति हकारस्य भकारः । 'उदि ग्रह' इत्यत्र 'उद्ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्यमननिपातनयो'रिति वचनादुन्निपूर्वाद्ग्रहेर्घञ् ।

---

**उद्द्योतः**–अत्र येनेत्येकवचनेन **विचारिणामिति** बहुवचनेन चानेकोच्चारणविषयत्वेऽप्यस्यैकत्वं सूचितम् । एवं च तेनैव दृष्टान्तेन घटपटादिबोधकसाधारण्येन वाचकस्यैकत्व सूचितम् । भेदप्रत्ययस्त्वौपाधिक इत्याद्यस्मत्कृतमञ्जूषायां शक्तिवादे द्रष्टव्यम् । नन्वेवं तस्य ताल्वोष्ठपुटव्यापारविषयत्वाभावादुच्चारितेनेत्ययुक्तमत आह—**प्रकाशितेनेति** । अभिव्यञ्जकैरिति शेषः ।

**अथवा प्रतीतपदार्थक इति** । लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रेन्द्रियग्राह्यत्वाद्वर्णरूपध्वनिसमूह एव शब्द इत्यर्थः । तस्याऽर्थबोधकताप्यऽविचारितरमणीयस्यैव लोके सिद्धा । तादृशस्यैव शास्त्रेणान्वाख्यानमिति तात्पर्यम् । तदाह–**अन्यत्रेति** । संग्रहादौ तपरसूत्रे भाष्ये चेत्यर्थः । ध्वनिपदेनात्र वैखरी । स्फोटपदेनाभिव्यक्तकत्वादिको मध्यमावस्थ आन्तरः शब्द उच्यते । **कथमस्येति** । कुर्वन्नित्यस्य वर्तमानार्थत्वादित्यर्थः ।

भाष्ये **कानि पुनः शब्दानुशासनस्येति** । शब्दज्ञानफलकव्याकरणाध्ययनस्येत्यर्थः । तदाह–**किं सन्ध्येति** । शब्दज्ञानद्वाराऽध्ययनस्य तदज्ञानप्राप्तप्रत्यवायपरिहार. फलमुत तदतिरिक्तमपि किंचिदिति प्रश्नाशय इत्यर्थः । प्रयोजनशब्दः करणव्युत्पत्त्या प्रयोजकपरोऽपि । तेन व्याकरणाध्ययनस्य प्रयोजकं किंचिदस्ति नवेत्यपि प्रश्नाशयो बोध्यः । अत एवोत्तरे आगमपदोपादानम् । **नपुंसकम**नपुंसकेनेत्येकशेषः । तत्रैकवद्भावस्य वैकल्पिकत्वात्प्रश्ने बहुवचनमुत्तरे एकवचनंबोध्यम् ।

पुरुषार्थोधर्मो, मोक्षश्च । ननु शिष्याचार्यसम्बन्ध एव महान् वेदरक्षाहेतुः किं व्याकरणेनेत्यत आह–**लोके इति** । **भ्राम्येदिति** । भ्रमेण पाठान्तरं कल्पयेदित्यर्थः । न चाचार्यवचनाद्भ्रमनिवृत्तिः, भ्रमशङ्कया तेष्वविश्वासात् । वेदार्थावगमद्वारापि व्याकरणं पुरुषार्थसाधनमित्याह—**वेदार्थं चेति** । एव च वेदार्थज्ञानपूर्वकं शुद्धतत्तन्मन्त्रैस्तद्विहितकर्मानुष्ठानेन स्वर्गसुखम्, उपनिषदर्थज्ञानेन वक्ष्यमाणरीत्या वा मोक्षश्च पुरुषार्थो व्याकरणाध्ययनस्य फलमिति भावः । **विकार इति** । लोपस्तु न विकार इति पृथग्गणितः । भावरूप एव चादेशोऽत्र विकारः । **हृग्रहोर्भ इति** । इदंच गृभ्णामीत्याद्यर्थमावश्यकम् । एतेन **उद्ग्राभनिग्राभौ** चेत्यनेनैव भस्यापि सिद्धत्वादेतदुपन्यासश्चिन्त्य इति परास्तम् । अन्यार्थमावश्यकेन तेनैव भस्य सिद्धौ तदंशे निपातनाश्रयणवैयर्थ्यात् । निपूर्वाद्ग्रहेर्घञ्विधायकाभावादाह—**उद्ग्राभनिग्राभौ चेति** ।

**ऊहः खल्वपि । न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः । ते चावश्यं यज्ञगतेन यथायथं विपरिणमयितव्याः । तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम् । तस्मादध्येयं व्याकरणम् ॥**

**आगमः खल्वपि । ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेय**

---

**प्रदीपः—ऊहः खल्वपीति ।** इह यस्मिन्यागे इतिकर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा **प्रकृतिः । येन चोपजीव्यते सा—विकृतिः ।** 'प्रकृतिवद्विकृतिः कर्तव्येति'मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग्विजानाति । तत्राऽग्नेर्मन्त्रोऽस्ति—'अग्नये त्वा जुष्टं निर्वपामी'ति । तत्र 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति सौर्ये चरौ मन्त्र ऊह्यते—'सूर्याय त्वा जुष्टं निर्वपामी'ति । विस्तरेण तु मदूहरिणा प्रदर्शित ऊहः ।

**आगम इति ।** आगमः प्रयोजकः प्रवर्त्तको नित्यकर्मतां व्याकरणाध्ययनस्य दर्शयति । **प्रयोजनशब्देन** च फलं प्रयोजकश्चोच्यते ।

---

**उद्द्योतः—भाष्ये—ऊहः खल्वपीत्यस्य** 'प्रयोजन'मिति शेषः । **खल्वपीति** निपातसमुदायो निश्चयार्थः । ननु यत्र प्रकरणे ये मन्त्राः पठितास्तत्र तेषां तथैव प्रयोग इष्ट इति नोहेन प्रयोजनमित्याशङ्क्य प्रकृतावूहाभावेऽपि विकृतावूह इति दर्शयितुं प्रकृतिशब्दार्थमाह-**इहेति । यस्मिन्**—आग्नेयादौ । **यागान्तरेण**—सौर्यादिना । प्रकृति-विकृत्यवगमश्च द्विदेवत्यत्वैकदेवत्यत्वादिसाम्येन बोध्यः । अन्यत्रपठितमन्त्राणां कथमन्यत्रगमनमत आह—**प्रकृतिवदिति ।** यथा सोपकारा प्रकृतिरनुष्ठीयते, तथा विकृतिरपीति तदर्थः । तदनेनोपकारातिदेशे तत्पृष्ठभावेन पदार्था अप्यतिदिश्यन्ते, इतिकर्तव्यतायां भावनायाः साकाङ्क्षत्वात् । एतन्मूलकमेव **प्रकृतिवदि**तीति मीमांसकसरणिः । पदार्थान्तर्गताश्च मन्त्रा । तत्र अग्निसंबन्धिनिर्वापप्रकाशकमन्त्रस्याग्निपदस्य सूर्यसंबन्धिनिर्वापप्रकाशनाऽसमर्थत्वात्तदपहाय तत्स्थाने सूर्यायेत्यूह्यमित्याह—**तत्राग्नेरिति । मन्त्र ऊह्यत इति ।** यद्यप्यूहे न मन्त्रत्वम्, तथाप्येकदेशस्योहेऽप्यनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात्तद्घटिते समुदाये मन्त्रत्वव्यवहारः, कर्मणः साङ्गत्वं चेति बोध्यम् । सोऽयं प्रकृत्यूहः । अन्येऽप्यूह्याः । ऊहज्ञस्य हि आर्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा—ऐहिकसुखसिद्धिः फलमिति बोध्यम् । भाष्ये **लिङ्गपदं च** प्रकृत्यादेरुपलक्षणम् । **यथायथमिति ।** अर्थप्रकाशनसामर्थ्यानतिलङ्घनेनेत्यर्थः ।

ननु वक्ष्यमाणस्य न व्याकरणफलत्वमत आह—**प्रवर्तक इति । नित्यकर्मतामिति ।** एतेन नित्यकाम्यता व्याकरणाध्ययनज्ञानस्येत्युक्तम् । नित्यत्वं चाध्येयज्ञेयपदार्थविशेषणीभूताध्ययनज्ञानयोर्बोध्यम् । अत्र **ब्राह्मणेनेत्युक्ते**ऽन्यस्यैवमध्ययनं काम्यमेवेति सूचयतीति कश्चित् । **निष्कारण इति ।** कारणशब्दः फलपरः । ननु नित्यत्वेऽपि प्रत्यवायपरिहाररूपं फलमस्त्येवेत्यत आह—**इष्टमिति ।** अध्ययनादिनिष्ठं कारणानपेक्षत्वं विषये आरोप्य 'निष्कारणो वेद'इति प्रयोगः । आगमपदेन श्रुतिः । श्रुतावपि जनमेजयाद्युपाख्यानवत्पौरुषेयव्याकरणस्यापि नित्यताबोधनमुपपद्यते । यद्वा तैव प्रोक्तमिति सूत्रभाष्यरीत्या वेदार्थवद्व्याकरणार्थोऽप्यनादित्वरूपनित्यतावानिति श्रुत्या तस्य नित्यत्वबोधनमिति बोध्यम् । धर्मत्वं च वेदस्य पुरुषयत्नसाध्यतया धर्मत्वेनाभिमताध्ययनज्ञानकर्मत्वेनौपचारिकमित्याहुः । **षडङ्गः** शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्यौतिषाङ्गसहितः । **वेदः** स्वशाखारूपः । **अध्येय** इत्यतः—

इति । प्रधानं च षट्स्वङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्नः फलवान्भवति ॥

लघ्वर्थं चाध्येयं व्याकरणम् । ब्राह्मणेनावश्यं शब्दा ज्ञेया इति । न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या ज्ञातुम् ॥

असंदेहार्थं चाध्येयं व्याकरणम् । याज्ञिकाः पठन्ति । स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति । तस्यां संदेहः स्थूला चासौ पृषती च स्थूलपृषती

---

प्रदीपः—निष्कारण इति । दृष्टं कारणमनपेक्ष्येत्यर्थः । प्रधानं चेति । पदपदार्थावगमस्य व्याकरणनिमित्तत्वात्तन्मूलत्वाच्च वाक्यवाक्यार्थावसायस्येति भावः ।

लघ्वर्थमिति । लाघवेन शब्दज्ञानमस्य प्रयोजनम् । ब्राह्मणेनेति । अध्यापनं ब्राह्मणस्य वृत्तिः । नचाऽशब्दज्ञमुपश्लिष्यन्ति च्छात्रा इति ।

असन्देहार्थमिति । सन्देहस्य प्रागभावोऽत्र द्रष्टव्यो न तु प्रध्वंसाभावः । न हि

---

उद्द्योत.—प्रेरणाविषयाध्ययनकर्मेति बोधः । यद्यपि तेन प्रोक्तमिति सूत्रे भाष्ये वक्ष्यमाणया रीत्या वेदत्वं शब्दतदर्थोभयनिष्ठम्, तथापि ज्ञेय इत्यस्य सम्यगर्थबोधपर्यवसाय्यध्ययनं कार्यमित्यर्थे तात्पर्यम् । अतएव 'सर्वानभेदैर्ज्ञानानामधीयानानां च केचिदर्थं बुध्यन्ते अपरे ने'ति वक्ष्यति भाष्यकृत्। अध्ययनतदर्थज्ञानयोश्च समुच्चयः । अनेनाऽताहशस्याऽधर्मत्वं सूचयति । श्रुत्या मिलितस्यैव धर्मत्वबोधनात् । तथा च व्यासः—

'वेदार्थज्ञो जपं जप्त्वा तदर्थाध्ययनं द्विजः । कुर्वन् स्वर्गमवाप्नोति नरकं तु विपर्यये' इति ॥

जपपदं मन्त्रसाध्यकर्ममात्रोपलक्षणम् । धात्वर्थतोऽत्र ज्ञानानुकूलो मनःप्रणिधानविषयेन्द्रियसंयोगसंपादनादिरूपो व्यापारोऽर्थस्तस्यैवात्र विधेयत्वम् । एतेन—ज्ञानस्याऽविधेयत्वादिदं चिन्त्यमित्यपास्तम् । ननु गुणानां परस्परसम्बन्धाऽभावात् 'षडङ्गेषु प्रधान'मित्यनुपपन्नमत आह—पदेति । एवञ्च वेदार्थज्ञाने व्याकरणं प्रधानं कारणमिति भावः । भाष्ये—प्रधाने कृतो यत्न इति । प्रधानविषये निवृत्त इत्यर्थः । अन्यथा यत्नविषयकृतेरसंभवादसङ्गतिः स्पष्टैव । भाष्ये फलवानित्यत्र—फलपदेन वाक्यार्थावगमो विवक्षितः । एतच्छास्त्रं च पदपदार्थावगमद्वारा वाक्यार्थावगमोपयोगीति बोध्यम् । एवं च व्याकरणानध्ययनप्रयुक्तस्य वेदार्थाज्ञानप्रयुक्तस्य च प्रत्यवायस्य परिहारकत्वादस्य नित्यत्वमिति बोध्यम् ।

अवश्यमित्यनेन विवक्षितं दर्शयति—अध्यापनमिति । लाघवं च प्रतिपदपाठापेक्षया प्रकृत्यादिविभागेनान्वाख्यानस्य विवक्षितम् ।

नन्वसन्देहः—सन्देहाभावः । स च नात्यन्ताभावः, तस्य नित्यत्वात् । न च ध्वंसः, तत्तद्विषयकव्याकरणज्ञानवतः सन्देहस्यैवाऽभावेन तदसंभवात् । यस्य त्वधीतव्याकरणस्यापि क्वचित्सन्देहः स तद्विषयकव्याकरणत्वाभाववानेव, वेदार्थे हि तत्र प्रत्ययोऽत आह—प्रागभाव इति । तत्परिपालनं च शास्त्राध्ययनफलम् । न तु स्वरूपं, तस्याऽजन्यत्वात् । तत्पालनं च प्रतियोगिजनककारणविध्वंसनं, प्रागभावस्य प्रतियोगिजनकनाश्यत्वादिति बोध्यम् ।

म्लेच्छा मा भूमेत्यध्येयं व्याकरणम् ।। तेऽसुराः ।।१।।

दुष्टः शब्दः—

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स व्याग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः *स्वरतोऽपराधादिति ।।

---

प्रदीपः—पदद्विर्वचने कार्ये वाक्यद्विर्वचनं लत्वं च म्लेच्छनमित्यपरे । 'न म्लेच्छितवा' इत्यस्य पर्यायो नापभाषितवा इति । 'कृत्यार्थे' इति 'तवै' प्रत्ययः । म्लेच्छ इति कर्मणि घञ् ।

दुष्टः शब्द इति । स्वरेण स्वरतः । आद्यादित्वात्तसिः । मिथ्याप्रयुक्त इति । यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयन्नाभिमतमर्थमाहेत्यर्थः । वागेव वज्रो हिंसकत्वात् । यथेन्द्रशत्रुशब्दः स्वरदोषाद्यजमानं हिंसितवानित्यर्थः । इन्द्रस्याभिचारो वृत्रेणारब्धस्तत्रेन्द्रशत्रुर्वर्धस्वेति मन्त्र ऊहितः । तत्रेन्द्रस्य शातयिता शमयिता वा भवेति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितो न तु रूढिशब्दः, तदाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थाऽभेदः । तत्रेन्द्राऽमित्रत्वे सिद्धे सतीन्द्रस्य शत्रुर्भवेत्यात्रार्थे प्रतिपाद्येऽन्तोदात्ते प्रयोक्तव्ये आद्युदात्त ऋत्विजा प्रयुक्त इत्यर्थान्तराभिधानादिन्द्र एव वृत्रस्य शातयिता सम्पन्नः । इन्द्रशत्रुत्वस्य च विधेयत्वात्सम्बोधनविभक्तेरनुवाद्यविषयत्वादिहाऽभावः ।

---

उद्द्योत—आह—लत्वं चेति । न म्लेच्छितवै—इत्येतन्म्लेच्छभाषाविषयमिति भ्रमनिवृत्त्यर्थं तद्विवरणं—नापभाषितवै इति । हवं इति प्रसिद्धौ । अपशब्दत्वं व्याकरणानुगतशब्दस्येषद्भ्रंशन एव प्रसिद्धमिति भावः । ननु म्लेच्छो नाम पुरुषविशेषो देशविशेषो वा स कथमपशब्दोऽत आह—घञिति । निन्दावचनान्म्लेच्छतेरिति भावः । निन्दा च शास्त्रबोधितविपरीतोच्चारणेन पापसाधनत्वात् । एवं च म्लेच्छा इत्यस्य निन्द्या इत्यर्थ इति दिक् ।

असर्वनामत्वात्तसोऽप्राप्तेराह—स्वरेणेति । आद्यादित्वादिति च । तमित्यस्य यच्छब्दापेक्षित्वादाह—यदर्थेति । मिथ्याप्रयुक्त इत्यस्य विवरणं—ततोऽर्थान्तरमिति । न केवलं तदर्थं नाहेत्येतावत्, प्रत्यवायोत्पादनद्वारा हिंसकोऽपीत्याह—वागेवेति । यथाऽध्वर्युकृताद्धोमाद्यजमाने धर्मोत्पत्तिः, एवं तत्कृतापशब्दप्रयोगात्तस्मिन् प्रत्यवाय इत्याशयः । तत्र दृष्टान्तमाह—यथेति । वृत्रेणेति । हेतौ तृतीया । फलमपीह हेतुः । मन्त्र इति । न चोहितस्य कथं मन्त्रत्वमिति वाच्यम् । मन्त्रशब्दस्य बोधकपरत्वात् । अतएव 'मन्त्रो हीनः स्वरतः' इति प्रसिद्धमपि शिक्षापाठं विहाय भाष्ये—'दुष्टः शब्दः' इति पठितं, तत्रत्यमन्त्रशब्दस्य शब्दमात्रपरतेति सूचयितुम् । शत्रुशब्दस्याऽमित्रपर्यायत्वे बहुव्रीहितत्पुरुषयोरविशेषोऽत आह—तत्रेन्द्रस्येति । शदेर्ण्यन्तादौणादिकः क्रुन् । प्रज्ञादित्वाण्, निपातनाद्ध्रस्वत्वम् । शमेस्तु तत्वम् । संबोधनविभक्त्यभावायाह—इन्द्रशत्रुत्वस्येति । नन्वत्र ककर्मकस्येत्येक-

---

*विमर्शः—इन्द्रः सूर्यलोकस्तस्य शत्रुरिव मेघः । अत्र 'इन्द्रशत्रु' शब्दे तत्पुरुषसमासार्थमन्तोदात्ते कर्त्तव्ये आद्युदात्तकरणाद् बहुव्रीहिः समासः कृतो भवति । अस्मिन् विषये तुल्ययोगितालङ्कारेण मेघसूर्ययोर्वर्णनं कृतमिति, ततोऽर्थवैपरीत्यं जायते । उत्तरपदार्थप्रधानस्तत्पुरुषोऽन्यपदार्थप्रधानो बहुव्रीहिः समासो भवति । तत्र यस्येच्छा सूर्यस्य ग्रहणेऽस्ति, तेनेन्द्रशत्रुशब्दः कर्मधारयसमासेनान्तोदात्त उच्चारणीयः । यस्य च मेघस्य तेन बहुव्रीहिसमासमाश्रित्याद्युदात्तस्वरश्चेति नियमोऽस्ति ।"

(ऋग्वेदादिभाष्यभूमिकायामृषिर्दयानन्दः)

दुष्टाञ्शब्दान्मा प्रयुक्ष्महीत्यध्येयं व्याकरणम् ॥ दुष्टः शब्दः ॥२॥

**यदधीतम्**—

यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम् ॥ यदधीतम् ॥३॥

यस्तु प्रयुङ्क्ते—

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः ॥

कः । वाग्योगविदेव । कुत एतत् । यो हि शब्दाञ्जानात्यपशब्दानप्यसौ

---

**प्रदीपः**—यथा—'राजा भव युध्यस्वे'ति । ऊह्यमानस्य चाऽमन्त्रत्वा**ज्जपकर्मत्वीति** जपादिपर्युदासेन मन्त्राणामेकश्रुतिर्विधीयमानेह न भवति ।

**अविज्ञातमिति**,—अविदितस्वरादिसंस्कारत्वादर्थाऽपरिज्ञानाद्वा । **निगदेनेति** । पाठमात्रेण । **न तज्ज्वलतीति** । निष्फलं भवति । **अनर्थकमिति** । निष्प्रयोजनम् ।

**यस्तु प्रयुङ्क्ते इति** । अनेनाऽभ्युदयहेतुत्वं व्याकरणाध्ययनस्य दर्शयति । **विशेष इति** । स एव शब्दः क्वचिदर्थे केनचिन्निमित्तेन प्रयुक्तः साधुरन्यथात्वसाधुः । यथाऽश्वेऽस्वशब्दो धनाऽभावनिमित्तकः साधुर्जातिनिमित्तकोऽसाधुः । गवि च गोणीशब्दः साधर्म्यात्प्रयुक्तः साधुर्जातिप्रयुक्तस्त्वसाधुः । **क इति** । वाग्योगविदःश्रुतत्वाद्दोषदर्शनाच्च **प्रश्नः** ।

प्रष्टैव परमतमाशङ्क्याह—**वाग्योगविदेवेति** । **एवमपशब्दज्ञानेऽपीति** । यथा श्लैष्मिकद्रव्यसेवया श्लैष्मिकव्याधिसम्भवस्तद्विपरीतसेवया त्वारोग्यं तथाऽत्रापि यथोक्तं न्याय्यमिति भावः ।

---

**उद्द्योतः**—श्रुतौ प्राप्तायां पूर्वपदप्रकृतिस्वरकरणं स्वरापराध इति वक्तुं युक्तम् । न च तथैवास्तु । शतपथब्राह्मणतद्भाष्यविरोधात् । तत्र हि-आद्युदात्तत्वकरणमेव स्वरापराध उक्त इत्यादि स्पष्टमस्मत्कृतैकश्रुत्यवादेऽत आह--**ऊह्यमानस्य चेति** । तदुक्तम् —'**अनाम्नातेष्वमन्त्रत्व**'मिति । नचाऽस्याऽमन्त्रत्वे लौकिकशब्देन क्रियमाणस्य कर्मणः कथं फलजनकत्वमिति वाच्यम्; **सूर्याय त्वे**त्यादेर्लौकिकघटितस्य-ऊहविधायकशास्त्रबलेन फलजनकत्ववदुपपत्तेरित्याहुः ।

नन्वधीतमविज्ञातमिति विरुद्धमत आह—**अविदितेति** । **शुष्कैध** इति सान्तक्लीबैधःशब्देनादन्तपुंल्लिङ्गेन वा निर्वाह्यम् । निरुक्ते तु **यद्गृहीतमविज्ञात**मिति पठ्यते । तत्र—**गृहीतं**—शब्दतः । **अविज्ञातमर्थत** इति बोध्यम् । भाष्ये—**तस्मादनर्थकमिति** । अनेन निन्दार्थवादेन निष्प्रयोजनाध्ययनाऽनौचित्येन निष्प्रयोजनं नाध्येयमिति निषेधकल्पनादिति भावः । अतो निषिद्धमध्ययनं मा भूदिति **व्याकरणमध्येयमिति** तात्पर्यम् ।

एकः **पूर्वपरयोरित्यत्र** भाष्यपठितैकः **शब्दः** इत्यादिश्रुतिमूलकमाह—भाष्ये—**यस्त्विति** । **अभ्युदयहेतुत्वम्**—अदृष्टद्वारा पुरुषार्थसाधनत्वम् । **कुशलः**—अधीतव्याकरणः । लक्षणस्मरणपूर्वकं यः प्रयुङ्क्ते इति फलति । **विशेष इति** । अर्थविशेषः इत्यर्थः । तदाह—**स एवेति** । **साधर्म्यात्**—साध-

लौकिकवैदिकेष्विति प्रयुञ्जते । अथवा युक्त एव तद्धितार्थः । यथा लौकिकेषु वैदिकेषु च कृतान्तेषु ।

लोके तावदभक्ष्यो ग्राम्यकुक्कुटोऽभक्ष्यो ग्राम्यशूकर इत्युच्यते । भक्ष्यं च नाम क्षुत्प्रतीघातार्थमुपादीयते । शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम् । तत्र नियमः क्रियते-इदं भक्ष्यमिदमभक्ष्यमिति । तथा-खेदात् स्त्रीषु प्रवृत्तिर्भवति, समानश्च खेदविगमो गम्यायां चागम्यायां च । तत्र नियमः क्रियते-इयं गम्येयमगम्येति ।

---

**प्रदीप**:—तत्वनिमित्तः । यथा कश्चिद्वनस्पतय इति प्रयुङ्क्ते कश्चिद्वानस्पत्यमिति समूहप्रत्ययान्तम् । **अथवेति** नात्राऽवयवावयविविभागः, किं तर्हि लोकवेदव्यतिरिक्तः सिद्धान्तः शब्दार्थो भवरूप इत्यर्थः । **लौकिकः**—स्मृत्युपनिबद्धः । **वैदिकः**—श्रुत्युपनिबद्धः । **शक्यं चानेनेति** । शकेः कर्मसामान्ये लिङ्गसर्वनामनपुंसकयुक्ते कृत्यप्रत्ययः । ततः पदान्तरसम्बन्धादुपजायमानमपि स्त्रीत्वं बहिरङ्गत्वादन्तरङ्गं संस्कारं न बाधते इति 'शक्यं क्षु'दित्युक्तम् । यदा तु पूर्वमेव विशेषविवक्षा तदा 'शक्या क्षु'दिति भवत्येव । यदा तु प्रतिघातस्यैव क्षुत्कर्म, शकेस्तु प्रतिघातस्तदा 'क्षुध प्रतिहन्तुं शक्य'मिति भवति । **खेदादिति** । खेदयतीति खेदो रागः । इन्द्रियनियमाऽसामर्थ्यं वा खेदः ।

---

**उद्द्योतः**—**नायमिति । ते वेदलोकेति** । अवयवे समुदायशब्दप्रयोगदर्शनादिति भावः । **आधाराधेयकल्पनयात्विति** । 'लोकवेदरूपसमुदायतदवयवयो'रित्यादिः । **नात्रावयवावयविविभागइति** । '**तत्र भव**' इत्यादिव्यवहारप्रयोजको विभागारोपोऽवयवावयविनोर्नेत्यर्थः । **कृतान्तेषु** । **कृतान्त**—सिद्धान्तः । तत्प्रतिपादकवाक्येष्वित्यर्थः । '**भक्ष्यं च नामे**'त्यस्य 'तद्भवति य'दिति शेषः । 'शक्यं क्षु'दिति सामानाधिकरण्यं कथं, भिन्नलिङ्गत्वादत आह-**शकेरिति । तदा क्षुधमिति** । ननु प्रधानक्रियानिरूपितशक्तेरभिधाने गुणक्रियानिरूपितशक्तेरनभिहिताया अभिहितवत्प्रकाशस्य **स्वादुमि णमुलि**त्यत्र वक्ष्यमाणत्वेन कथमेतदिति चेन्न; प्रधानतिङन्तार्थक्रियानिरूपितशक्तेरेवायं स्वभावो यत्स्वसमानाधिकरणगुणशक्तेरभिहितवत्प्रकाश इत्यभिमानात् । वस्तुत इदमयुक्तमेवेति **स्वादुमी**'त्यत्र निरूपयिष्यामः ।

**खेद इति** । एवं च ग्रामकुक्कुटपरदारादौ विशेषनिषेधस्येतराभ्यनुज्ञाफलकतया आरण्यकतद्भक्षणस्वदारगमनयोर्यथा दोषाभावो यथा च ग्राम्यकुक्कुटभक्षणपरदारगमनयोरधर्मस्तथा शास्त्रजनितज्ञानपूर्वके गवादिप्रयोगेऽपूर्वोत्पत्तिरूपं फलं शास्त्रेण बोध्यते, तेषां साधुत्वबोधनात् । अर्थादपशब्दानामधर्मजनकत्वं बोध्यते, एकविधेस्तदितरनिषेधफलकत्वात् । यथैकनिषेधस्यापराभ्यनुज्ञाफलकत्वमिति भावः । दृष्टान्तता त्वंशेन, वक्ष्यमाणवैदिकानां तु सर्वांशेनेति बोध्यम् ।

वेदे खल्वपि—"पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्य आमिक्षाव्रतो वैश्यः" इत्युच्यते । व्रतं च नामाभ्यवहारार्थमुपादीयते । शक्यं चानेन शालिमांसादीन्यपि व्रतयितुम् । तत्र नियमः क्रियते । तथा—"बैल्वः खादिरो वा यूपः स्या"दित्युच्यते । यूपश्च नाम पश्वनुबन्धार्थमुपादीयते । शक्यं चानेन किंचिदेव काष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्द्धुम् । तत्र नियमः क्रियते । तथाग्नौ कपालान्यधिश्रित्याभिमन्त्रयते—"भृगूणामाङ्गिरसां तपसा तप्यध्वम्"+इति । अन्तरेणापि मन्त्रमग्निर्दहनकर्मा कपालानि संतापयति । तत्र नियमः क्रियते—एवं क्रियमाणमभ्युदयकारि भवतीति ।

एवमिहापि समानायामर्थगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते—शब्देनैवार्थोऽभिधेयो नापशब्देनेत्येवं क्रियमाणमभ्युदयकारि भवतीति ।

अस्त्यप्रयुक्तः । सन्ति वै शब्दा अप्रयुक्ताः । तद्यथा—ऊष, तेर, चक्र, पेचेति । किमतो यत्सन्त्यप्रयुक्ताः ? प्रयोगाद्धि भवाञ्शब्दानां साधुत्वमध्य-

---

**प्रदीपः—पयोव्रत इति** । सत्यामर्थितायां पय एव व्रतयतीति नियमोऽयं न तु विधिः, अर्थित्वाभावे कारणाऽभावात् ।

**समानायामिति** । यद्यपि साक्षादपभ्रंशा न वाचकास्तथापि स्मर्यमाणसाधुशब्दव्यवधानेनाऽर्थं प्रत्याययन्ति । केचिच्चापभ्रंशाः परम्परया निरूढिमागता. साधुशब्दानस्मारयन्त एवाऽर्थं प्रत्याययन्ति । **अन्ये तु** मन्यन्ते—'साधुशब्दवदपभ्रंशा अपि साक्षादर्थस्य वाचका' इति ।

---

**उद्द्योतः—व्रतयतीति** । अभ्यवहार्यत्वेनोपादत्त इत्यर्थः । भाष्ये—**उच्छ्रित्यानुच्छ्रित्य वेति** । सन्तक्ष्याऽसन्तक्ष्य वेत्यर्थः । निखन्याऽनिखन्य वेत्यर्थ इत्यन्ये ।

ननु अपभ्रंशा न वाचका., वाच्यप्रतीत्यन्यथानुपपत्त्या कल्प्यमानशक्तेः शिष्टप्रयुक्तसंस्कृतेष्वेव कल्पनात् । तदनुसारेणैव चापभ्रंशाना साधुस्मरणेन बोधकत्वोपपत्ते. '**समानायामित्यनुपपन्नमिति** शङ्कते—**यद्यपीति** । **तथापीति** । एवं च वाचकत्वाभावेऽप्यर्थप्रत्यायकत्वाऽविशेषेण '**समानाया**'मित्युक्तम् । **निरूढिमागता इति** । ते च शक्तिभ्रमेण बोधका इति भावः । शक्तिभ्रमश्चेत्थम्—केनचिद् 'गावी'ति प्रयुक्ते गौरिति साधुशब्दस्मरणात् प्रयोज्यस्य बोधेऽपि तटस्थस्यगावीशब्दादेवास्य गोबोध इति भ्रमस्तन्मूलकोऽन्येषामपि भ्रम इति । वस्तुतो विनिगमनाविरहाद्भाषाशब्देष्वपि शक्तिरेवेत्याह—**अन्येत्विति** । **साधुत्वं** चैतन्मते शब्दगतधर्मसाधनतावच्छेदकवैजात्यमेव । यद्यपि **साधुनेव भाषेतेति** न श्रूयते, तथापि फलनिर्देशवाक्ये तन्निर्देशादेवेदृशविधिः कल्प्यते । तत्र **के साधव** इत्याकाङ्क्षायामेत एव साधव इति व्याकरणेन प्रतिपादनात्तद्द्वारा शास्त्रेण धर्मनियमो विधीयत इति बोध्यम् । भाष्य—**शब्देनैवेति** । साधुनेत्यर्थः । **एवं क्रियमाणमिति** । शास्त्रज्ञानपूर्वकमुच्चार्यमाणमित्यर्थः ।

---

+यजुर्वेदे १।१८

वस्यति, य इदानीमप्रयुक्ता नामी साधव स्यु ।

इद तावद् विप्रतिषिद्धं यदुच्यते सन्ति वै शब्दा अप्रयुक्ता इति । यदि सन्ति नाप्रयुक्ता अथाप्रयुक्ता न सन्ति, सन्ति चाप्रयुक्ताश्चेति विप्रतिषिद्धम् । प्रयुञ्जान एव खलु भवानाह सन्ति शब्दा अप्रयुक्ता इति । कश्चेदानीमन्यो भवज्जातीयक पुरुष शब्दाना प्रयोगे साधु स्यात् ? नैतद् विप्रतिषिद्धम् । सन्तीति तावद्ब्रूमो यदेताञ्शास्त्रविद शास्त्रेणानुविदधते । अप्रयुक्ता इति ब्रूमो यल्लोकेऽप्रयुक्ता इति । यदप्युच्यते कश्चेदानीमन्यो भवज्जातीयक पुरुष शब्दाना प्रयोगे साधु स्यादिति, न ब्रूमोऽस्माभिरप्रयुक्ता इति । किं तर्हि ? लोकेऽप्रयुक्ता इति । ननु च भवानप्यभ्यन्तरो लोके । अभ्यन्तरोऽह लोके न त्वह लोक ।

---

**प्रदीप —अस्त्यप्रयुक्त इति ।** प्रयोगमूलत्वादस्या स्मृतेरप्रयुक्तानामप्यन्वाख्यानादप्रामाण्यमाशङ्कते । यथा घटादीना विनाऽप्यर्थक्रियया सत्त्व गम्यते नैव शब्दाना ते हि सर्वदा व्यवहाराय प्रयुज्यमाना सन्त सत्त्वेनावसीयन्ते इत्याह-**इदमिति । कश्चेदानीमिति** उपहासपरम् ।

उत्तर तु—शास्त्रदृष्ट्या प्रकृतिप्रत्ययादिसद्भावादनुमितसत्त्वाद् व्यवहारे तु न दृश्यन्त इत्युक्तम् ।

**न त्वह लोक इति ।** यथा लोकोऽर्थावगमाय शब्दान् प्रयुङ्क्ते नैव मयैतेऽर्थे प्रयुक्ता अपि तु स्वरूपपदार्थका इत्यर्थं ।

---

**उद्द्योत —'अस्त्यप्रयुक्त** इत्याद प्रकृतोपयोगमाह–**प्रयोगमूलत्वादिति । 'लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियम** इत्यनेन प्रयुक्तेषु साध्वसाधुषु प्रयुक्तसाध्वन्वाख्यानेन तेषु धर्म प्रयुक्ताऽसाधुष्वधर्म इत्यर्थकेनेद सूचितम् । एव चा प्रयुक्तानामप्रयोगेणैवाऽसाधुत्वानुमानादसाधूनामप्यनेनान्वाख्यानादप्रामाण्यमिति भाव । वार्तिकोक्तनियमानुपपत्तिश्चेत्यपि बोध्यम । भाष्ये **किमत इति ।** अप्रयुक्त सत्त्वे नाऽस्माकमनिष्ट, साधुमात्रार्थत्वाद्व्याकरणस्येत्यर्थं । उत्तरम्–**प्रयोगादिति ।** तथा चाऽप्रयोगादसाधुत्वानुमानमिति भाव ।

विप्रतिषिद्धत्वमुपपादयति—**यथेति ।** एव च सत्त्वे प्रयोग आवश्यक एव । अप्रयोगे च सत्त्वमेव न स्यादिति भाव । ननु लक्षणवशान सत्त्व, केनाप्यप्रयोगाच्चाऽप्रयुक्तत्वमिति न विरोधोऽतो भाष्ये–**प्रयुञ्जान एवेति ।** ननु मया प्रयुक्तश्चेत्किं, तत्र सोपहासमाह–**कश्चेदानीमिति ।** स्वयमेव प्रयोगं कृत्वा **'सन्ति चाऽप्रयुक्ता** इत्यादीना शब्दाना प्रयोगे साधुर्योग्य स्यादित्यर्थं । त्वत्प्रयोगेणैव प्रयुक्तत्वाऽवगमेऽप्रयुक्तत्वोक्तिर्विरुद्धेति भाव ।

ननु लोकान्तर्भूतस्य 'न त्वह लोक इति वचो विरुद्धमत आह—**यथेति । अर्थबोधाय** शब्दान्प्रयुञ्जानो हि मम लोकत्वेनाऽभिमत इत्यर्थं ।

**अस्त्यप्रयुक्त इति चेन्नार्थे शब्दप्रयोगात् ॥४॥**

अस्त्यप्रयुक्त इति चेत्तन्न । किं कारणम् ? अर्थे शब्दप्रयोगात् । अर्थे शब्दाः प्रयुज्यन्ते । सन्ति चैषां शब्दानामर्था येष्वर्थेषु प्रयुज्यन्ते ।

**अप्रयोगः प्रयोगान्यत्वात् ॥५॥**

अप्रयोगः खल्वेषां शब्दानां न्याय्यः । कुतः ? प्रयोगान्यत्वात् । यदेतेषां शब्दानामर्थेऽन्याञ्शब्दान्प्रयुञ्जते । तद्यथा—ऊषेत्यस्य शब्दस्यार्थे क्व यूयमुषिताः । तेरेत्यस्यार्थे किं यूयं तीर्णाः । चक्रेत्यस्यार्थे किं यूयं कृतवन्तः । पेचेत्यस्यार्थे किं यूयं पक्ववन्त इति ।

**अप्रयुक्ते दीर्घसत्त्रवत् ॥६॥**

यद्यप्यप्रयुक्ताः, अवश्यं दीर्घसत्त्रवल्लक्षणेनानुविधेयाः । तद्यथा—दीर्घसत्त्राणि वार्षशतिकानि वार्षसहस्रिकाणि च, न चाद्यत्वे कश्चिदपि व्यव-

---

**प्रदीपः— अर्थे शब्दप्रयोगादिति ।** अर्थसद्भावः शब्दप्रयोगे लिङ्गम् । न हि विना शब्देनाऽर्थप्रत्यायनमुपपद्यते ।

इतरोऽन्यथासिद्धतामाह—**अप्रयोग इति** । यतोऽन्ये तेषामर्थाना सन्ति वाचकास्ततो नैषामनुमानमुपपद्यते । यद्यप्यूषेत्यस्य उषिता इति समानार्थो न भवति, परोक्षतादेर्विशेषस्याऽनवगमात्तथापि तत्प्रत्यायनाय पदान्तरसहितः प्रयुज्यते ।

संप्रत्यप्रयुज्यमानानामपि पूर्वं प्रयुक्तत्वादनुशासनं कर्तव्यमित्याह—**अप्रयुक्ता इति ।**

---

**उद्द्योतः—भाष्ये—अर्थे शब्दप्रयोगादिति ।** अर्थविषयकज्ञानाय शब्दप्रयोगादित्यर्थः । तदाशयमाह— **अर्थसद्भाव इति ।**

भाष्ये—**प्रयोगान्यत्वादिति** । प्रयुज्यत इति **प्रयोगः**—शब्दः, सोऽन्यो यस्यार्थस्यास्ति तत्त्वादित्यर्थः । सर्वनाम्नः परनिपातः पूर्वनिपातप्रकरणाऽनित्यत्वात् । **पदान्तरसहित इति । पदान्तरं**—'क्व यूय'मिति । तत्र 'क्वे'त्यनेन साधनपारोक्ष्यं, निष्ठया भूतत्वं कर्तृत्वं च । 'यूय'मित्यनेन मध्यमपुरुषबोध्यमाभिमुख्यं चेतनत्वं वा बहुत्वं च । वसेः साक्षाद्गत्यर्थाकर्मकेत्यत्र निर्देशात्तारतेर्गत्यर्थत्वात्कर्तरि क्तः । नन्वाख्याते क्रियाविशेष्यको बोधोऽत्र च कर्तृविशेष्यक इति कथं लिडन्तसमानार्थत्वमिति चेन्न; विषयताविशेषानादरेण तथोक्तेः । न चाख्याते क्रियाविशेष्यकबोधे 'पक्ष्यति—भवति' 'अपाक्षीद्भवती'ति भूवादिसूत्रस्थभाष्यप्रयोगविरोधः, अतीतानागतपाककर्तृकसत्ताया वर्तमानत्वासङ्गतेरिति वाच्यम्; वर्तमानसामीप्ये तत्र लटः सत्त्वात् । 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्यादौ यत्कर्तृको यागस्तत्कर्तृकं तरणमिति बोधः । अत एव 'ह्रस्वो नपुंसके' इति सूत्रे 'रमते ब्राह्मणकुलमिति क्रियाप्रधान'मिति भाष्ये उक्तम् ।

नन्वप्रयुक्तानुशासने निर्मूलत्वाच्छास्त्रस्याऽप्रामाण्यं स्यादत आह—**संप्रतीति** । पाणिनेर्व्याकरणप्रणयनकाले इत्यर्थः । पूर्वप्रयोगसत्ता च व्याकरणप्रणयनादेवानुमीयत इति भावः । इदमपि यत्र भाष्यवार्तिककाराभ्यामप्रयुक्तत्वं नोक्तं तदभिप्रायकमनुमानं बोध्यम् । **वार्षशतिकानीति ।**

हरति, केवलमृषिसंप्रदायो धर्म इति कृत्वा याज्ञिकाः शास्त्रेणानुविदधते ।

**सर्वे देशान्तरे ॥७॥**

सर्वे खल्वप्येते शब्दा देशान्तरे प्रयुज्यन्ते । न चैत उपलभ्यन्ते । उपलब्धौ यत्नः क्रियतां, महान्हि शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा विभिन्नाः—एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं, नवधाथर्वणो वेदः, वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावाञ्शब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ता इति वचनं केवलं साहसमात्रम् ।

एतस्मिन्नतिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा—शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते शव इति । हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु ।

---

**प्रदीपः—ऋषिसंप्रदाय इति ।** वेदाध्ययनमित्यर्थः । **सर्वे इति ।** इदमत्र तात्पर्यम्—यस्य कस्यचिद्वचनात्प्रयोगाऽप्रयोगौ न व्यवतिष्ठेते, अपि तु शिष्टानामेव वचनात् ।

**वाकोवाक्यमिति ।** 'वाकोवाक्य' शब्देनोक्तिप्रत्युक्तिरूपो ग्रन्थ उच्यते । यथा—किं वावपनं महत्' 'भूमिरावपनं मह' दिति* । पूर्वचरितसङ्कीर्तनमितिहासः । वंशाद्यनुकीर्तनं—पुराणम् ।

**विकार इति ।** जीवतो मृतावस्था विकारस्तत्रेत्यर्थः ।

---

उद्द्योतः—**वर्षशब्दो** दिवसपरः, यथाश्रुत एव वा । **आहरति ।** सामग्र्यभावादिति भावः । ननु सत्त्राणां बहुयजमानकानामृषिभिर्वसिष्ठादिभिः सम्प्रदीयमानत्वाभावा**हृषिसंप्रदाय** इत्ययुक्तमत आह—**वेदेति ।** भाष्ये '**कृत्वे**'त्यनन्तर**मधीयते** इति शेषः । याज्ञिकाश्च कल्पसूत्रेणान्वाचक्षत इत्यर्थः । अत्र सत्त्राणां कर्मत्वम् । अनुपलब्ध्याऽप्रयुक्तत्वं शङ्कते—भाष्ये **न चैत इति ।**

**त्रयो लोका इति ।** भूर्भुवःस्वरात्मका इत्यर्थः । इतरलोकापेक्षया वसुमत्यां शब्दबाहुल्यात्तस्याः पृथग्ग्रहणम् । **भुव**रित्यनेनान्त्यपातालपर्यन्तसङ्ग्रहः । स्वरित्यनेनोपरितनसकलसङ्ग्रहः । **रहस्यम्**—उपनिषत्, मन्वादिस्मृतयो वा वेदनिगूढार्थप्रकाशकत्वात् । एवं च **देशान्तरशब्दः** शास्त्रान्तरवेदान्तरोपलक्षक इति बोध्यम् ।

भाष्ये—**हंमति**'रित्यत्र '**रंहति**'रित्यत्र च 'गतिकर्मे'त्यनुकर्षः । **दातिर्लवनार्थ इति ।** क्तिन्नन्तं क्तिजन्तं वा । लवनेऽर्थे दातिशब्दं **प्राच्याः** प्रयुञ्जते, तत्राऽर्थे दात्रशब्द**मुदीच्या** इत्यर्थः ।

---

*यजुर्वेदे २३।४५,४६

ये चाप्येते भवतोऽप्रयुक्ता अभिमताः शब्दा एतेषामपि प्रयोगो दृश्यते । क्व ? वेदे । यद्वो रेवती रेवत्यं तदूष +। यन्मे नरः श्रुत्यं ब्रह्म चक्र ।(ऋ.वे.१।१६५।११) यत्रा नश्चक्रा जरसं तनूनाम् । (ऋ. वे. १।८९।९)

किं पुनः शब्दस्य ज्ञाने धर्म आहोस्वित्प्रयोगे ? कश्चात्र विशेषः ?

**ज्ञाने धर्म इति चेत्तथाधर्मः ॥८॥**

ज्ञाने धर्म इति चेत्तथाधर्मः प्राप्नोति । यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति । यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽप्यधर्मः । अथवा भूयानधर्मः प्राप्नोति । भूयांसोऽपशब्दा अल्पीयांसः शब्दाः । एकैकस्य शब्दस्य बहवोऽपभ्रंशाः । तद्यथा—गौरित्यस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः ।

**आचारे नियमः ॥९॥**

आचारे पुनर्ऋषिर्नियमं वेदयते । तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुरिति । अस्तु तर्हि प्रयोगे ।

---

**प्रदीपः—किं पुनरिति** । 'एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति (भाष्ये ६।१।८४) इति श्रुतिः । तत्र किं सम्यग्ज्ञातः कामधुग्भवति, सुप्रयोगात्तु सम्यग्ज्ञातत्वानुमानमित्यर्थः, आहोस्वित्सुप्रयुक्तः कामधुग्भवति, सुप्रयुक्तत्वं सम्यग्ज्ञानादित्यर्थ इति **प्रश्नः** ।

**ज्ञाने धर्म इति चेदिति** । यथा श्लेष्मणः प्रकोपनं स्नेहद्रव्यं, रूक्षं तु वायोस्तथेहापि प्राप्तमिति भाव. । **आचारे इति** । **प्रयोगे ऋषिर्वेद**: ।

---

**उद्द्योतः**—वार्तिकोक्तो धर्मनियमः श्रुतिसिद्धस्तस्यामुभयोः श्रवणात्प्रश्न इत्याह—**एकः शब्द इति** । तत्र **'यदेकस्मादपूर्वं तदेतरस्तदर्थ'**मिति न्यायादद्वयोः साम्येन फलसंबन्धाभावाद्विकल्पाऽयोगेनैकस्य प्राधान्यमपरस्याङ्गत्वं कल्प्यम् । तत्र **'प्रथमं वा नियम्येते'**ति न्यायाश्रयेणाह—**तत्र किमिति** । **'सर्वत्रैव हि विज्ञानं संस्कारित्वेन गम्यते । पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम्** ।' इति न्यायेन ज्ञानस्य शेषशेषतया धर्महेतुत्वाभावात्, प्रयोगाङ्गतया दृष्टार्थत्वाच्च, प्रयोगस्य फल प्रति संनिहितत्वाच्चाह—**आहोस्विदिति** ।

**यथा श्लेष्मण इति** । तथा धर्मजनकज्ञानविपरीतत्वात्तद्विपरीतजनकत्वेनापशब्दज्ञानादधर्मप्राप्तिरित्यर्थः ।

**प्रयोगे इति** । एवंच प्रयोगादेवाऽधर्मवद्धर्मोऽपीति ज्ञानाद्धर्म इति वेदविरुद्धमिति भावः ।

---

+ "सप्तास्ये रेवती रेवदूष" (४।५१।४) इति ऋग्वेदे पाठो दृश्यते ।

**प्रयोगे सर्वलोकस्य ॥१०॥**

यदि प्रयोगे धर्मः, सर्वो लोकोऽभ्युदयेन युज्येत। कश्चेदानीं भवतो मत्सरो यदि सर्वो लोकोऽभ्युदयेन युज्येत ? न खलु कश्चिन्मत्सरः। प्रयत्नानर्थक्यं तु भवति। फलवता च नाम प्रयत्नेन भवितव्यं, न च प्रयत्नः फलाद् व्यतिरेच्यः। ननु च ये कृतप्रयत्नास्ते साधीयः शब्दान्प्रयोक्ष्यन्ते, त एव साधीयोऽभ्युदयेन योक्ष्यन्ते। व्यतिरेकोऽपि वै लक्ष्यते। दृश्यन्ते हि कृतप्रयत्नाश्चाप्रवीणाः, अकृतप्रयत्नाश्च प्रवीणाः। तत्र फलव्यतिरेकोऽपि स्यात्। एवं तर्हि नापि ज्ञान एव धर्मो नापि प्रयोग एव। किं तर्हि ?

**शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन ॥११॥**

शास्त्रपूर्वकं यः शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन युज्यते। तत्तुल्यं वेदशब्देन। वेदशब्दा अप्येवमभिवदन्ति "योऽग्निष्टोमेन यजते य उ चैनमेवं वेद।" "योऽग्निं नाचिकेतं चिनुते य उ चैनमेवं वेद"।

अपर आह तत्तुल्यं वेदशब्देनेति। यथा वेदशब्दा नियमपूर्वमधीताः फलवन्तो भवन्त्येवं यः शास्त्रपूर्वकं शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन युज्यत इति।

---

**प्रदीपः—नच प्रयत्न इति**। यदि प्रयत्नेन विना फलं स्यात्प्रयत्नस्य वैयर्थ्यमापद्येतेत्यर्थः। **व्यतिरेक इति**—परिहासः।

**तत्तुल्यमिति**। वेदः शब्दो यस्यार्थस्य स **वेदशब्दः**। तस्य यथा ज्ञात्वाऽनुष्ठानं तथा शब्दानामपि प्रकृत्यादिविभागज्ञानपूर्वकः प्रयोग इत्यर्थः। **अपर आहेति**। **वेदश्चासौ** शब्दश्च वेदशब्द इति कर्मधारयः।

---

उ०—भाष्ये-**फलाद्व्यतिरेच्य इति**। फलवद्वृत्त्यभावप्रतियोगी न कार्य इत्यर्थः। **प्रयत्नवैयर्थ्यमिति**। व्याकरणाध्ययनविषयकप्रयत्नवैयर्थ्यमित्यर्थः।

**साधीय इति**—क्रियाविशेषणम्। शास्त्रसंस्कारवतां प्रभूतशब्दप्रयोगजन्यबहुपूर्वद्वारा **बहु**तराभ्युदयफलत्वमित्यर्थः।

भाष्ये—**तत्र फलव्यतिरेक इति**। कौशलव्यतिरेकवत् फलव्यतिरेकोऽपि स्यादिति तस्य व्याकरणाऽध्ययनं व्यर्थमेव स्यादिति भावः।

**शास्त्रपूर्वके इति**। व्याकरणाध्ययनपूर्वके इत्यर्थः। तत्र वेदाङ्गत्वादेतद्व्याकरणाध्ययनपूर्वकप्रयोगे एव धर्म इति **प्रामाणिकाः**। **वेदः शब्द इति**। बोधक इत्यर्थः। प्रमाणमित्यर्थो वा। **तस्य यथेति**। तस्य यथा '**य उ चैनमेवं वेदे**'ति ग्रन्थेन वेदतो ज्ञात्वाऽनुष्ठानं फलायोक्तन्तथाऽस्यापि शास्त्रज्ञानपूर्वकः प्रयोगः फलायेत्येकः **शब्द** इत्यादिनोक्तमित्यर्थः।

अथ वा पुनरस्तु—'ज्ञान एव धर्म' इति । ननु चोक्तं—'ज्ञाने धर्म इति चेत्तथाऽधर्म' इति ? नैष दोषः । शब्दप्रमाणका वयम् । यच्छब्द आह तदस्माकं प्रमाणम् । शब्दश्च शब्द ज्ञाने धर्ममाह, नापशब्दज्ञानेऽधर्मम् । यच्च पुनरशिष्टाऽप्रतिषिद्धं, नैव तद्दोषाय भवति नाभ्युदयाय । तद्यथा—हिक्कितहसितकण्डूयितानि नैव दोषाय भवन्ति नाप्यभ्युदयाय* ।

अथवाऽभ्युपाय एवापशब्दज्ञानं शब्दज्ञाने । यो ह्यपशब्दाञ्जानाति शब्दानप्यसौ जानाति । तदेवं 'ज्ञाने धर्मः' इति ब्रुवतोऽर्थादापन्नं भवति—'अपशब्दज्ञानपूर्वके शब्दज्ञाने धर्मः' इति ।

अथवा कूपखानकवदेतद्भविष्यति† । तद्यथा—कूपखानकः कूपं खनन्यद्यपि मृदा पांसुभिश्चावकीर्णो भवति । सोऽप्सु संजातासु तत एव तं गुणमासादयति येन स च दोषो निर्हण्यते; भूयसा चाभ्युदयेन योगो भवति । एवमिहापि

प्र०—**अथवेति** । अपशब्दज्ञाननान्तरीयकत्वाच्छब्दज्ञानस्य पृथक्फलमपशब्दज्ञानस्य नास्तीत्यर्थः ।

**दोष इति** । उत्कृष्टधर्मफलावाप्तौ स्वल्पमधर्मफलमुत्पन्नमप्यनुत्पन्नकल्पं भवतीत्यर्थः ।

उ०—भाष्ये—**प्रमाणमिति** । प्रामाणिकमित्यर्थः । **शब्दश्च शब्दज्ञाने इति** । '**एकः शब्दः सम्यग्ज्ञात**' इत्यादि । '**हेलयो हेलय**' इत्यादि तु अपशब्दप्रयोगेऽधर्ममाह, न तु ज्ञाने इति भावः । यद्यपि तत्र 'प्रयुक्त' इत्यप्युक्तं, तथाप्यवैयाकरणस्य सम्यक्प्रयोगादपि धर्माऽभावेन ज्ञानमेव तद्धेतुः । प्रयोगस्तु तस्य द्वारमिति भावः ।

भाष्ये—**अभ्युपाय एवेति** । अपशब्दज्ञाननान्तरीयकं शब्दज्ञानमिति शब्दज्ञानेन फले जननीये सहकारितैवाऽपशब्दज्ञानस्य न पृथक्फलतेति भाव । **अपशब्दज्ञानम्**—अपशब्दत्वेन तज्ज्ञानम् । एवं '**शब्दज्ञाने**' इत्यपि । अपशब्दत्वेन तज्ज्ञाने हि तद्भिन्नत्वेन शब्दज्ञानं भवति '**यो ह्य**'ति भाष्यस्य य एव अपशब्दाञ्जानात्यसावेव शब्दाञ्जानातीति तज्ज्ञानसमानाधिकरणशब्दज्ञानादेव धर्म इति न ततो विपरीतफलकल्पना युक्तेति भावः । तदाह—**अपशब्दज्ञाननान्तरीयकत्वादिति** । बहुव्रीहिः । न हि वह्न्यानयननान्तरीयकं ततः पात्रानयनं पृथक्फलं भवति ।

'**तुष्यतु दुर्जन**' इति न्यायेनापशब्दज्ञानस्य विपरीतत्वमात्रेणाऽधर्मसाधनत्वमभ्युपगम्यापि भाष्ये समाध्यन्तरमाह—**अथ वा कूपेति** । **मृत्**—आर्द्रा । **पांसुः**—शुष्का । 'यत्कर्मनान्तरीयककर्मजन्यो यो विपरीतत्वमात्रेण कल्प्योऽवैधो दोषः स तत्कर्मजन्यफलनाश्यो, यथा कूपखनननान्तरीयकशरीरव्यापारजन्यो

* विस्तरेण तु द्वितीयाह्निके 'ऋलृक्' सूत्रव्याख्याने द्रष्टव्यम् ।

† एवं प्राप्नोति महतः प्राणोऽर्थान्नातिपापतः । कूपखानकवत् प्राप्ते फले दोषं निहन्ति च ॥१३४॥
( कथासरित्सागरे शक्तियशोलम्बके दशमे तरङ्गे )

यद्यप्यपशब्दज्ञानेऽधर्मस्तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन स च दोषो निर्घानिष्यते† भूयसा चाभ्युदयेन योगो भविष्यति ।

यदप्युच्यते—'आचारे नियमः' इति, याज्ञे कर्मणि स नियमोऽन्यत्राऽनियमः । एवं हि श्रूयते—'यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः पराऽपरज्ञा‡ विदितवेदितव्या अधिगतयाथातथ्याः ।' ते तत्रभवन्तो यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते, याज्ञे पुनः कर्मणि नापभाषन्ते । तैः पुनरसुरैर्याज्ञे कर्मण्यपभाषितन्ततस्ते पराभूताः ।

अथ 'व्याकरण'मित्यस्य शब्दस्य कः पदार्थः ? सूत्रम् ।

---

प्र०—प्रत्यक्षधर्माण इति । योगजप्रत्यक्षेण सर्वं विदितवन्तः । परापरज्ञा इति । विद्याऽविद्याविभागज्ञाः ।

अथेति । उक्तमिदं 'न चान्तरेण व्याकरण'मित्यादि । तत्र पक्षद्वयेऽपि दोषदर्शनात्पदार्थप्रश्नः ।

---

उ०—मृल्लेपस्तत्फलजलनाश्य' इति सामान्यतोदृष्टानुमानात्सत्त्वाद्यानुमानमिति बोध्यम् । उत्कृष्टधर्मेति । धर्मस्य विधिबोध्यत्वादुत्कृष्टत्वम् । अधर्मस्य तु वचनाऽबोध्यत्वेन विपरीतत्वमात्रेण कल्प्यस्याऽल्पत्वेन तत्फलधर्मनाश्यत्वम् । यागीयहिंसाया 'न हिंस्या'दिति वचनेन दुष्टताबोधनाददुष्टत्वमेवेत्यन्यत्र विस्तरः ।

भाष्ये—अन्यत्रानियम इति । यज्ञे सुशब्दप्रयोगाद्धर्मोऽपशब्दप्रयोगादधर्म इति तत्रैव तयोः प्रयोगनियमः । तदतिरिक्तस्थले तु सुशब्दापशब्दयोः प्रयोगेऽनियमः । योऽपि यज्ञे दोषः सोऽपि तदङ्गभूतसंकल्पोहादिविषये एव । अतो 'हेलयो हेलयो नश्यत्व'मित्यूह एव । 'विदितवेदितव्या' इत्यनेन श्रवणमनननिदिध्यासनसंपदुक्ता । 'अधिगतयाथातथ्या' इत्यनेन साक्षात्कार उक्तः । याथातथ्ये स्वार्थे ष्यञ् । वेदितव्यस्य यद्यथातथास्वरूपं सत्यं स्वरूपं शुद्धचिदानन्दरूपं तदधिगतं प्रत्यक्षेण प्राप्तं यैरित्यर्थः । याज्ञे पुनरिति । अनेन तत्त्वज्ञानिनामपि कर्माधिकारं सूचयति । 'प्रयुञ्जते' इति वर्तमानसमीपे भूते लट् । एवं 'नापभाषन्त' इत्यपि । एवं तन्नामानो बभूवुरित्यर्थः ।

व्याकरणपदार्थविचारस्य सङ्गतिं दर्शयितुमाह—उक्तमिदमिति । आदिना—'तस्मादध्येयं व्याकरण'मित्यादि पुनः पुनरुक्तिर्गृह्यते ।

---

† हन्तेरत्पूर्वस्य [ ८ । ४ । २२ ] इति णत्वाऽभावः ।

‡ द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च ॥ ४ ॥ तत्रापरा—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥ ( मुण्डकोपनिषदि १ । १ )

**सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः ॥ १२ ॥**

**सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते—'व्याकरणस्य सूत्र'मिति । किं हि तदन्यत्सूत्राद्व्याकरणं यस्याऽदः सूत्रं स्यात् ?**

**शब्दाऽप्रतिपत्तिः ॥ १३ ॥**

**शब्दानां चाऽप्रतिपत्तिः प्राप्नोति, 'व्याकरणाच्छब्दान्प्रतिपद्यामहे' इति । न हि सूत्रत एव शब्दान् प्रति पद्यन्ते । किं तर्हि ? व्याख्यानतश्च । ननु च तदेव सूत्रं विगृहीतं व्याख्यानं भवति† । न केवलानि चर्चापदानि व्याख्यानं 'वृद्धिः' 'आत्' 'ऐ'जिति । किं तर्हि ? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति‡ । एवं तर्हि शब्दः ।**

प्र० – **षष्ठ्यर्थ इति** । द्वाभ्यामपि शब्दाभ्यामष्टाध्याय्याः प्रतिपादनाद्व्यतिरेकाभावः । सामान्यविशेषशब्दतया तु द्वयोः सहप्रयोगो न विरुध्यते । यदा त्वष्टाध्याय्येकदेशः 'सूत्र'शब्देनोच्यते तदा षष्ठ्यर्थोऽप्युपपद्यते ।

**शब्दाप्रतिपत्तिरिति** । न हि व्याख्यानरहितसूत्रमात्रश्रवणाच्छब्दाः प्रतीयन्ते ।

**समुदितमिति** । समुदायादेवाऽर्थावसायोत्पादादित्यर्थः ।

उ०—ननु सूत्रसमुदायस्य व्याकरणस्येदं सूत्रमित्युपपद्यतेऽत आह—**द्वाभ्यामिति** । सूत्रपदेनाप्यष्टाध्याय्येव यदोच्यते तदापीष्यतेऽयं प्रयोगः, स न सिध्येदित्यर्थः । ननु किमुच्यते—'**षष्ठ्यर्थोऽनुपपन्न**' इति, पर्यायतया सहप्रयोगोऽपि न स्यादत आह—**सामान्यविशेषेति** । **सूत्रं सामान्यं**, व्याकरणं **विशेषः** । **सूत्र**शब्देनाष्टाध्याय्येव, तदेकदेशे तु योगव्यवहार एव '**योगे योगे उपतिष्ठत**'इत्यादौ । **यदा त्विति** । '**सूत्राणि चाप्यधीयाने**'इति भाष्ये वक्ष्यमाणत्वादिति भावः । वस्तुत एकदेशस्य सूत्रत्वेऽपि तस्यापि साक्षात्परम्परया वा व्याकरणत्वात्षष्ठ्यर्थानुपपत्तिरेवेति तत्त्वम् ।

समुदायस्यातिरिक्तत्वेऽपि दोषमाह—भाष्ये—**शब्दाप्रतिपत्तिरिति** । 'व्याकरणाच्छब्दान्प्रतिपद्यामहे' इति शब्दविषयव्यवहाराऽसिद्धिः प्राप्नोतीत्यर्थः । यतः केवलसूत्रेभ्यः शब्दप्रतिपत्तिर्न दृश्यते, व्याकरणस्य शब्दप्रतिपत्तिहेतुत्वं च लोकसिद्धम्, 'व्याकरणाच्छब्दान्प्रतिपद्यामहे'इति व्यवहारात् । सेयं प्रतिपत्तिसाधनता सूत्राद्व्यावर्तमाना तद्व्याप्यां व्याकरणशब्दवाच्यतां व्यावर्त्तयतीति भावस्तदाह—**नहीति** ।

भाष्ये—**चर्चापदानि** । चर्च्यमानानि विभज्यमानानीत्यर्थः । **वाक्याध्याहार इति** । **वाक्यघटक**पदाना सूत्रान्तरे श्रुतानां स्वरितत्वप्रतिज्ञयाऽध्याहारः कल्पनमित्यर्थः । यद्वा 'वाक्याध्याहार' इत्यनेन वार्तिककृद्वाक्यानां सूत्रतात्पर्यविषयता वाक्यैकदेशन्यायेन सूचिता ।

**शब्द इति** । लक्ष्यमित्यर्थः । अत्र पक्षे षष्ठ्यर्थ उपपद्यते । शब्दाऽप्रतिपत्तिहेतुता तु तदवस्था ।

† सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके । सूत्रं योनिरिहार्थानां सूत्रे सर्वं प्रतिष्ठितम् ॥

‡ उपोद्घातः पदञ्चैव पदार्थः पदविग्रहः । चालना प्रत्यवस्थाश्च व्याख्या तन्त्रस्य षड्विधा ॥

## शब्दे ल्युडर्थः ॥१४॥

यदि शब्दो व्याकरणं, ल्युडर्थो नोपपद्यते—'व्याक्रियन्ते शब्दा अनेने'ति व्याकरणम् । नहि शब्देन किंचिद्व्याक्रियते । केन तर्हि ? सूत्रेण ।

## भवे च तद्धितः× ॥ १५ ॥

भवे च तद्धितो नोपपद्यते† 'व्याकरणे भवो योगो वैयाकरणः' इति । न हि शब्दे भवो योगः । क्व तर्हि ? सूत्रे ।

## प्रोक्तादयश्च तद्धिताः ॥ १६ ॥

प्रोक्तादयश्च तद्धिता नोपपद्यन्ते‡ पाणिनिना प्रोक्तं पाणिनीयम्, आपिशलम्, काशकृत्स्नमिति । नहि पाणिनिना शब्दाः प्रोक्ताः । किं तर्हि ? सूत्रम् ।

किमर्थमिदमुभयमुच्यते—'भवे प्रोक्तादयश्च तद्धिता' इति । न 'प्रोक्तादयश्च तद्धिताः' इत्येव भवेऽपि तद्धितश्चोदितः स्यात् ?

पुरस्तादिदमाचार्येण दृष्टं—'भवे च तद्धितः' इति, तत्पठितम् । तत उत्तरकालमिदं दृष्टम्—'प्रोक्तादयश्च तद्धिताः' इति, तदपि पठितम् । न चेदानीमाचार्याः

प्र०—**शब्द इति** । करणे ल्युड्विधीयते । शब्दश्च व्याक्रियमाणत्वात्कर्म न करणमिति भावः ।

**भवे चेति** । शब्देऽप्यन्वाख्यापकत्वेन भवो योग इति चेन्मीमांसादियोगस्यापि शब्दं प्रति विचारकत्वाद्वैयाकरणत्वप्रसङ्गः ।

**न चेदानीमिति** । लक्षणप्रपञ्चाभ्यां मूलसूत्रवद्वार्त्तिकानामुपपत्त्या दोषाभावः ।

उ०—ननु 'राजभोजना' इतिवत्कर्मणि ल्युटि न दोषोऽत आह—**करणे इति** । कर्मणि स तु काचित्क इति भावः ॥

**लक्षणप्रपञ्चाभ्यामिति** । यथा कर्मधारयप्रकरणे अलुकप्रकरणे च । विजिगीषुकथायां हि अभिहिताभिधानमशक्तिसूचकत्वाद्दोषाय । इह तु व्युत्पादनार्थत्वान्न दोषकृदिति भावः । पूर्वं सामान्ये उक्ते पश्चाद्विशेष-

× 'भवे' इत्येव पाठः कीलहार्नसम्मतः । परन्तूत्तरभाष्यस्वारस्याद् 'भवे च तद्धितः' इत्येव वार्तिकपाठः सङ्गच्छते ।

† ४ । ३ । ५३ ‡ ४ । ३ । १०१

सूत्राणि कृत्वा निवर्त्तयन्ति† ।

अयं तावददोषो—यदुच्यते—'शब्दे ल्युडर्थः' इति । नावश्यं करणाधिकरणयोरेव ल्युड्विधीयते । किं तर्हि ? अन्येष्वपि कारकेषु—कृत्यल्युटो बहुलम् [ ३ । ३ । ११३ ] इति । तद्यथा—प्रस्कन्दनम्, प्रपतनमिति ।

अथ वा शब्दैरपि शब्दा व्याक्रियन्ते । तद्यथा—'गौ'रित्युक्ते सर्वे सन्देहा निवर्त्तन्ते 'नाश्वो न गर्दभ' इति ।

अयं तर्हि दोषः—भवे प्रोक्तादयश्च तद्धिता इति । एवं तर्हि–

**लक्ष्यलक्षणे व्याकरणम् ॥ १७ ॥**

लक्ष्यं च लक्षणं‡ चैतत्समुदितं व्याकरणं भवति । किं पुनर्लक्ष्यं लक्षणं च ?

---

प्र०—**प्रस्कन्दनमिति** । यद्यप्ययं भीमादिस्तथापि 'कृत्यल्युटो बहुल'मित्यस्यैव 'भीमादयोऽपादाने' इत्ययं प्रपञ्च इति भाव. ।

**गौरित्युक्ते इति** । सास्नादिमति यदा कंचित्प्रति 'अय गौः' इत्युच्यते तदा तत्र वाचकान्तराणां निवृत्तिः कृता भवति, एवमेकस्मिन्नुदाहरणे उपन्यस्ते सर्वाणि तत्सदृशानि शब्दान्तराणि प्रतीयन्ते ।

---

उ०—कथनं प्रपञ्चार्थमिति युज्यते, अत्र तु विपरीतमिति न तत्साम्यमित्यन्ये ।

**प्रतीयन्त इति** । एवंच विपरीतव्यावृत्तिः सदृशसङ्ग्रहश्च व्याकृतिरिति भावः । एतेन शब्दाऽप्रतिपत्तिरप्यत्र पक्षे उद्धृता ।

व्यावर्त्यव्यावर्तकरूपलक्षणस्यातिप्रसक्तत्वात्पृच्छति भाष्ये—**किं पुनरिति** ।

---

† भाष्यकारस्येयं व्याख्याशैल्यन्यस्थलेष्वपि दृश्यते । तद्यथा—

"अदस ईत्त्वोत्वे स्वरे बहिष्पदलक्षणे [ ८ । २ । ६—६ ] अदस ईत्त्वोत्वे स्वरे बहिष्पदलक्षणे सिद्धे वक्तव्ये । अमी अत्र । अमी आसते । अमू अत्र । अमू आसाते ॥

प्रगृह्यसंज्ञाया च [ १० ] प्रगृह्यसंज्ञाया च सिद्धे वक्तव्ये । अमी अत्र । अमी आसते । अमू अत्र । अमू आसाते ।······किमर्थमिदमुभयमुच्यते, न प्रगृह्यसंज्ञायामित्येव स्वरेऽपि बहिष्पदलक्षणे चोदितं स्यात् ? पुरस्तादिदमाचार्येण दृष्टं स्वरे बहिष्पदलक्षण इति तत्पठितम् । तत उत्तरकालमिदं दृष्टम्–प्रगृह्यसंज्ञायां चेति तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ।"[ ८ । २ । ३४ ]

"प्रातिपदिकस्य च प्रत्यापत्तिः [ ६ । ३ । ३४—२ ] प्रातिपदिकस्य च प्रत्यापत्तिर्वक्तव्या । एनी भार्याअस्य एतभार्यः । श्येतभार्यः ॥ स्थानिवद्भावप्रसङ्गश्च [ ३ ] स्थानिवद्भावश्च प्राप्नोति । पट्वी भार्या अस्य पटुभार्यः । मृदुभार्यः ।······किमर्थमिदमुभयमुच्यते, न प्रातिपदिकस्य च प्रत्यापत्तिरित्येव स्थानिवद्भावोऽपि चोदितः स्यात् ? पुरस्तादिदमाचार्येण दृष्टं स्थानिवत्प्रसङ्गश्चेति तत्पठितम् । तत उत्तरकालमिदं दृष्टम्-प्रातिपादिकस्य च प्रत्यापत्तिरिति तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ।" [८।३।३४]

‡ उत्तमो लक्षणज्ञानी लक्ष्यज्ञानी तु मध्यमः । लक्ष्यलक्षणयोर्ज्ञानी तद्धि पात्रं प्रचक्षते ॥१२५॥

( अमोघानन्दिनीशिक्षायाम् )

शब्दो लक्ष्यः, सूत्रं लक्षणम् । एवमप्ययं दोषः—समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपद्यते । सूत्राणि चाप्यधीयान इष्यते—'वैयाकरण' इति ।

नैष दोषः समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्त्तन्ते । तद्यथा—'पूर्वे पञ्चालाः','उत्तरे पञ्चालाः','तैलं भुक्तम्','घृतं भुक्तम्','शुक्लो' 'नीलः' 'कपिलः' 'कृष्ण' इति । एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेष्वपि वर्त्तते ।

अथ वा पुनरस्तु सूत्रम् । ननु चोक्तम्—'सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्न' इति ? नैष दोषः । व्यपदेशिवद्भावेन भविष्यति ।

यदप्युच्यते—"शब्दाप्रतिपत्तिरि"ति । नहि सूत्रत एव शब्दान्प्रतिपद्यन्ते ।

---

प्र०—पूर्वे पञ्चाला इति । जनपदान्तरनिवृत्तिविवक्षायामेकदेशेऽपि समुदायरूपारोपात्प्रयोगः । तैलमिति । यदौषधसंस्कृता घृततैलमात्रा भवति तदेदमुदाहरणम् । आकृतिवाचित्वे तु घृततैलशब्दयोः संस्थानप्रमाणनिरपेक्षा सर्वत्र मुख्या वृत्तिः । शुक्ल इति । अशुक्लेऽप्यवयवेऽवयवान्तरस्य शौक्ल्यात्समुदायस्य शुक्लत्वे सति तदारोपात्प्रयोगः ।

व्यपदेशिवद्भावेनेति । यथा 'राहोः शिर' इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदव्यवहारः, एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायां करणरूपत्वमुच्यते, सूत्रशब्देन तु समुदायरूपतेति भेदव्यवहार उपपद्यते ।

सूत्रत एवेति । पदच्छेदादिभिः सूत्रार्थस्यैवाऽभिव्यञ्जनात् । आत इति निपातः ।

---

उ०—जनपदान्तरेति-भावप्रधानो निर्देशः । यदेति । मात्रा-परिच्छिन्नोऽशः । औषधसंस्कृते तत्र समुदाये घृतादिशब्दस्य रूढिरिति भावः । अशुक्लेऽप्यवयवे इति । 'प्रयोग' इत्यनेनान्वेति । आरोपादिति, समुदायस्य शुक्लत्वे अशुक्लावयवे प्रयोगे च हेतुः । तत्र समुदाये शुक्लत्वारोपे हेतुः—अवयवान्तरस्य शौक्ल्यादिति । वनैकदेशे पुष्पिते 'पुष्पितं वन'मितिवदेकदेशेऽपि शुक्ले 'शुक्लः पटः' इति व्यवहार इति बोध्यम् ।

शब्दार्थभेदादिति । अनेकावस्थायुक्तं शिरो 'राहु'शब्दार्थः । यत्किञ्चिदेकावस्थायुक्त तच्छिरः—शब्दार्थः । तादृशराहुशब्दार्थस्य तादृशशिरःपदार्थोऽवयव इति षष्ठ्यर्थोपपत्तिरिति भावः । सूत्रशब्देन तु समुदायरूपतेति । अनेकावस्थायुक्तस्य तस्य व्याकृतिक्रियाकरणावस्थाविशिष्टमवयव इति तद्रूपावयवस्याऽयं समुदाय इत्यर्थः' । ईदृशस्थले विकल्पात्मकं ज्ञानं वस्तुशून्यमेव । व्यपदेशिवद्भावविषयेऽप्येवमेव, 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः इति योगसूत्रे पतञ्जल्युक्तेरित्यन्ये ।

भाष्ये—अविजानत इति । मन्दबुद्धेरित्यर्थः । सूत्रत एवेति । एतन्मूलमेव पठ्यते 'सूत्रेष्वेव

किं तर्हि ? व्याख्यानतश्चे"ति । परिहृतमेतत्, 'तदेव सूत्रं विगृहीतं व्याख्यानं भवती'ति ।

ननु चोक्तम्—"न केवलानि चर्चापदानि व्याख्यानं—'वृद्धिः आत् ऐ'जिति, किंतर्हि ? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवती'ति । अविजानत एतदेवं भवति । सूत्रत एव हि शब्दान् प्रतिपद्यन्ते । आतश्च सूत्रत एव, यो ह्युत्सूत्रं कथयेन्नादो गृह्येत ।

अथ किमर्थो वर्णानामुपदेशः ?

**वृत्तिसमवायार्थ उपदेशः ॥ १८ ॥**

वृत्तिसमवायार्थो वर्णानामुपदेशः कर्तव्यः । किमिदं वृत्तिसमवायार्थ इति ? वृत्तये समवायो वृत्तिसमवायः । वृत्त्यर्थो वा समवायो वृत्तिसमवायः । वृत्तिप्रयोजनो वा समवायो वृत्तिसमवायः । का पुनर्वृत्तिः ? शास्त्रप्रवृत्तिः । अथ कः समवायः ? वर्णानामानुपूर्व्येण संनिवेशः । अथ क उपदेशः ? उच्चारणम् । कुत एतत् ? दिशि-

प्र०—अतश्च हेतोरित्यर्थः । **नाद इति** । नैतदित्यर्थः । अथवा नादोऽर्थरहितत्वाद्घोषमात्रमेवेत्यर्थः ।

**किमर्थ इति** । नहि वर्णोपदेशेन कस्यचित्साधुशब्दस्यानुशासनमिति भावः ।

**वृत्तिसमवायार्थ इति** । लाघवेन शास्त्रप्रवृत्त्यर्थ इत्यर्थः । धर्मनियमवत्समासः । **वृत्त्यर्थ इति** । शास्त्रप्रवृत्तिप्रत्यासन्नत्वं समावायस्य दर्शयति । 'इग्यण' इत्यादौ हि यथासङ्ख्यशास्त्रं वर्णसंनिवेशमात्रादेवाऽवतिष्ठते । **वृत्तिप्रयोजन इति** । पारम्पर्येण शास्त्रप्रवृत्तावस्याऽङ्गत्वम् ।

उ०—**हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके**' इति ।

ननु लोकप्रसिद्धमातृकापाठेनैव वर्णज्ञानसम्भवान्माहेश्वरो† वर्णसमाम्नायः **किमर्थ** इति पृच्छति—भाष्ये **किमर्थं इति** । पाणिनये महादेवकृत इत्यर्थः । ननु साधुत्वान्वाख्यानं फलमत आह—**नहीति** ।

उत्तरम्—**वृत्तिसमवायार्थं इति** । **वृत्तिः** शास्त्रप्रवृत्तिस्तदुपयोगी **समवायो** वर्णगतः क्रमविशेषः, स बोध्यत्वेनार्थः प्रयोजनं यस्य स तथोक्तः । सति ह्यक्षरसमाम्नायेऽजादिसंज्ञाभिर्लाघवेन शास्त्रप्रवृत्तिरिग्यण इत्यादौ **यथासङ्ख्यप्रवृत्तिश्चे**ति भावः । अनेनाऽस्य शास्त्रबहिर्भूतत्वं सूचितम् । अत एव **मङ्गलार्थं महतः शास्त्रौघस्यादितो वृद्धिशब्दं पठती**'ति वक्ष्यति । अन्यकर्तृकत्वं च सूचितम् । 'पाणिनिशास्त्रप्रवृत्त्यर्थं उपदेश' इत्युक्ते उपदेशे गुरुकर्तृकतायाः स्वरसतः प्रतीतेः । सिद्धोच्चारणेपि 'मन्त्रोपदेश' इत्यादावुपदेशव्यवहारात् । '**अनुबन्धकरणार्थं**' इत्यत्र करणपदेनेतरस्य सिद्धत्वसूचनात् । तत्करणं चोपदेशकर्तृकर्तृकमेव प्रत्यासत्तेरित्याहुः । भाष्ये—**किमिदमिति** । कोऽयं समास इति प्रश्नः । **धर्मनियमवदिति** । षष्ठीसमासः । पक्षत्रयभेदमुपपादयति—**शास्त्रेति** । आद्यतात्पर्यं तूक्तं '**लाघवेन शास्त्रप्रवृत्त्यर्थः**' इति । ननु नेदमाद्योच्चारणमस्याऽ-

† 'भाष्यकृदनुक्तमेषां माहेश्वरत्वं स्ववासनया नागेश आहेत्यवधेय'मिति गुरुप्रसादशास्त्री ।

रुच्चारणक्रियः । उच्चार्य हि वर्णानाह—उपदिष्टा इमे वर्णा इति ।

**अनुबन्धकरणार्थश्च ॥ १९ ॥**

अनुबन्धकरणार्थश्च वर्णानामुपदेशः कर्तव्यः । 'अनुबन्धानासङ्क्ष्यामी'ति । नह्यनुपदिश्य वर्णाननुबन्धाः शक्या आसङ्क्तुम् । स एष वर्णानामुपदेशो वृत्तिसमवायार्थश्चाऽनुबन्धकरणार्थश्च । वृत्तिसमवायश्चानुबन्धकरणं च प्रत्याहारार्थम् । प्रत्याहारो वृत्त्यर्थः ।

**इष्टबुद्ध्यर्थश्च ॥ २० ॥**

इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः—'इष्टान्वर्णान्भोत्स्यामहे'† इति । न ह्यनुपदिश्य वर्णानिष्टा वर्णाः शक्या विज्ञातुम् ।

**इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः ॥ २१ ॥**

इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः कर्तव्यः । एवङ्गुणा अपि हि वर्णा इष्यन्ते ।

---

प्र०—सति हि समवाये इत्संज्ञा । तत आदिरन्त्येनेति प्रत्याहारस्ततो **ढ्लोप** इत्यादिशास्त्रप्रवृत्तिः ।

**प्रत्याहारार्थमिति** । प्रत्याहारशब्देनाऽणादिकाः संज्ञा उच्यन्ते ।

**इष्टबुद्ध्यर्थश्चेति** । सति ह्युपदेशे 'कलादिदोषरहिता ये वर्णा निर्दिष्टास्तथैव प्रयोक्तव्या' इत्युक्त भवति ।

एकश्रुत्या हि सूत्राणां पाठात्सर्वेषामुदात्तादीनामुपदेशः कर्तव्य इत्याह—**इष्टबुद्ध्यर्थश्चेति चेदिति** ।

---

उ०—नादित्वात्, तत्कथमुपदेशत्वव्यवहारोऽत आह भाष्ये—**उच्चारणमिति** । ढक्कानिनादेनाभिव्यक्तिरित्यर्थः ।

फलान्तरमाह—**अनुबन्धकरणार्थश्चेति** । अनुबन्धबोधनार्थ इत्यर्थः । **चेनाऽकारस्य** विवृतगुणत्वसङ्ग्रहः, उपलक्षणत्वेन वा । अनुबन्धत्वं च समुदायान्त्यत्वे सति, नान्यथेति तात्पर्यम् । ननु 'प्रत्याहार' शब्देन सूत्रं चेत्तादर्थ्यमनुबन्धानामनुपपन्नमत आह—**प्रत्याहारशब्देनेति** । अधिकरणव्युत्पत्त्या, अर्श आद्यचा वेति भावः । भाष्ये—**वृत्त्यर्थं इति** । लाघवेन शास्त्रप्रवृत्त्यर्थ इत्यर्थः । एतेन प्रत्याहारद्वारा समवायस्य वृत्त्यर्थता दर्शिता ।

**भोत्स्यामहे इति**—अन्तर्भावितण्यर्थः । बोधयिष्यामह इत्यर्थः । एवं '**विज्ञातु**'मित्यस्य विज्ञापयितुमित्यर्थः । **सति ह्युपदेशे इति** । एवं च व्याकरणाध्येतॄणामक्षरसमाम्नायेनैवावश्यकेनेष्टवर्णज्ञाने सिद्धे न तदर्थं मातृका पाठनीयेति भावः ।

**एकश्रुत्येति** । त्रैस्वर्येण पाठे तु द्वयोरेव कर्त्तव्यतां वदेदित्यर्थः । तेषां लोकितः सिद्धौ तु दोषरहितानामपि तत एव सिद्धे रुपदेशवैयर्थ्यापत्तिरिति भावः । त्रैस्वर्येण पाठेऽपि अन्यतमपाठेऽन्यस्य कर्तव्यत्वाभिप्रायेण सर्वेषां ग्रहणमित्यन्ये ।

---

† 'भोत्स्ये' इति पाठान्तरम् । पूर्ववार्तिकव्याख्याने 'आसङ्क्ष्यामि' इत्येकवचनदर्शनादिहापि 'भोत्स्ये' पाठः समीचीनतरः प्रतिभाति ।

## आकृत्युपदेशात्सिद्धम् ॥ २२ ॥

आकृत्युपदेशात् सिद्धमेतत् । अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथेवर्णाकृतिः । तथोवर्णाकृतिः ।

## आकृत्युपदेशात्सिद्धमिति चेत्संवृतादीनां प्रतिषेधः ॥ २३ ॥

'आकृत्युपदेशात्सिद्ध'मिति चेत्संवृतादीनां प्रतिषेधो वक्तव्यः । के पुनः संवृतादयः ?

संवृतः[1] कलो[2] ध्मात[3] एणीकृतो[4]ऽम्बूकृतो[5]ऽर्द्धको[6] ग्रस्तो[7] निरस्तः[8] प्रगीत[9] उपगीतः[10] क्ष्विण्णो[11] रोमश[12] इति । अपर आह—

ग्रस्तं[1] निरस्तम्[2]अविलम्बितं[3] निर्हतम्[4]अम्बूकृतं[5] ध्मातम्[6]अथो विकम्पितम्[7] ।
सन्दष्टम्[8]एणीकृतम्[9]अर्धकं[10] द्रुतं[11] विकीर्णम्[12]एताः स्वरदोषभावनाः † ॥

---

**प्र०—आकृत्युपदेशादिति** । उपात्तोऽपि विशेषो नान्तरीयकत्वाज्जातिप्राधान्यविवक्षाया न विवक्ष्यत इत्यर्थः ।

**संवृतादीनामिति** । एकारादीना संवृतत्वं दोषो न त्वकारस्य, तस्य संवृतगुणत्वात्, तत्र सन्ध्यक्षरेषु विवृतत्वेनोच्चार्येषु संवृतत्वं दोषः । **कलः**—स्थानान्तरनिष्पन्नः काकलिकत्वेन प्रसिद्ध । **ध्मात**—श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्ष्यते । **एणीकृतो**ऽविशिष्ट', 'किमय-

---

उ०—आकृत्युपदेशे किमित्यकारादिह्रस्वव्यक्तिविशेषोपादानम् ? तदुपादाने व्यक्त्यन्तरग्रहणानापत्तिश्चेत्यत आह—**उपात्त इति** । नान्तरीयकत्वं च–तं विना जातेरुच्चारयितुमशक्यत्वात् ।

**संवृतादीनामिति** भाष्ये । तादृशदोषसहितानामाकृतिग्रहणात्प्राप्तस्य ग्रहणस्य प्रतिषेधो वक्तव्य इत्यर्थः । तदाह—**एकारादीनां संवृतत्वमिति** । **अविशिष्ट इति** । संश्लिष्टः सन्दिग्ध इति यावत् ।

---

† शौनकीय ऋग्वेदप्रातिशाख्ये वर्णदोषा एवं व्याख्याताः—ग्रस्तम्—जिह्वामूलनिग्रहे ग्रस्तमेतत् [ १४ । ८ ] निग्रहो नाम स्तम्भनम् ।

निरस्तम्—निरस्तं स्थानकरणापकर्षे [ १४ । २ ] अम्बूकृतम्—ओष्ठाभ्यामम्बूकृतमाह नद्धं दुष्टम् [ १४ । ४ ] ओष्ठाभ्या नद्धम् । बद्धमित्यर्थः । यदाह वक्ता तद्दुष्टमम्बूकृतमित्युच्यते ।

"लुप्तवर्णपदं **ग्रस्तं**, **निरस्तं** त्वरितोदितम् ॥३५०॥ **अम्बूकृतं** सनिष्ठीवमबद्धं स्यादनर्थकम् ॥३५१॥ ( इत्यमरः )

सन्दष्टम्—सन्दष्टं तु व्रीडन आह हन्वोः [ १४ । ६ ] व्रीडनं नाम हन्वोर्नीचैर्भावः ।

क्ष्विण्णः, रोमशः—लोमश्यं च क्ष्वेडनमूष्मणा तु [ १४ । २० ] लोमश्यं नामासौकुमार्यम् । क्ष्वेडनं नामाधिको वर्णस्य सरूपोध्वनिः ।

एणीकृतम्—मुखाद् विप्रुषोऽनिर्गमयन्,, एणीकृतम् । ( लाट्यायन श्रौतसूत्रे ६ । १० । १८ )

याज्ञवल्क्यशिक्षायामध्ययनाधिकारे चतुर्दशपाठदोषाः प्रदर्शिताः—

शङ्कितं भीतमुद्घृष्टमव्यक्तमनुनासिकम् । काकस्वरं मूर्द्धिगतं तथा स्थानविवर्जितम् ॥ २८ ॥
विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् । व्याकुलं तालहीनं च पाठदोषाश्चतुर्दश ॥ २९ ॥

इति । अतोऽन्ये व्यञ्जनदोषाः ।

नैष दोषः । गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिर्भविष्यति । अस्त्यन्यद्गर्गादिबिदादिपाठे प्रयोजनम् । किम् ? समुदायानां साधुत्वं यथा स्यादिति ।

एवं तर्ह्यष्टादशधा भिन्नां निवृत्तकलादिकामवर्णस्य प्रत्यापत्तिं वक्ष्यामि । सा तर्हि वक्तव्या ।

---

प्र०—मोकार अथौकार' इति यत्र सन्देहः । अम्बूकृतो यो व्यक्तोऽप्यन्तर्मुख इव श्रूयते । अर्धको-दीर्घोपिह्रस्व इव । ग्रस्तो-जिह्वामूले निगृहीतः । अव्यक्त इत्यपरे । निरस्तो-निष्ठुरः । प्रगीत —सामवदुच्चारित । उपगीत —समीपवर्णान्तरगीत्याऽनुरक्तः । क्ष्विण्णः—कम्पमान इव । रोमशो—गम्भीरः । अविलम्बितो—वर्णान्तराऽसंभिन्न । निर्हतो—रूक्षः । सन्दष्टो—वर्द्धित इव । विकीर्णो—वर्णान्तरे प्रसृत । एकोऽप्यनेकनिर्भासीत्यपरे । स्वरदोषभावना इति । स्वरदोषगोत्राणि‡ । अनन्ता हि दोषा अशक्तिप्रमादकृताः ।

अस्त्यन्यदिति । 'गर्ग' इत्यादिनैव संनिवेशेन गर्गादीनां साधुत्वं यथा स्याद्गार्ग्य इत्यादीना मा भूत् । ततश्च तद्गतानामेवाऽकारादीनां दोषनिवृत्तिः कृता स्यात्, न तु समुदायान्तरस्थानाम् । यद्यपि प्रत्ययविध्यर्थो गर्गादीनां पाठस्तथापि प्रसङ्गात्समुदायसाधुत्वार्थोऽपि भवति ।

निवृत्तकलादिकामिति । अकारस्य संवृतत्वान्निवृत्तसंवृतत्वादिकामिति नोक्तम् । अकारस्य निदर्शनार्थत्वात्सर्ववर्णानां शास्त्रान्ते प्रत्यापत्तिरित्यर्थः ।

---

उ०—ह्रस्व इवेति । तद्वत्कालसङ्कोचेनोच्चारित इत्यर्थः । निष्ठुर इति । त्वरित इत्यन्ये । गोत्राणीति । स्वरदोषजातय इत्यर्थः ।

भाष्ये—गर्गादिबिदादिपाठादिति । संवृतादिदोषरहितानामेव तत्र पाठादिति भावः ।

साधुत्वमिति । निवृत्तकलादिदोषवत्त्वमित्यर्थः । गार्ग्य इत्यादीनामिति । तत्रत्यानां कलादिदोषनिवृत्तिर्न स्यादित्यर्थः । तदाह—ततश्चेति । परे तु समुदायानाम्—एतत्प्रकृतिकयञन्तसमुदायानां साधुत्वं यथा स्यादित्यर्थं पाठश्चरितार्थो न कलादिदोषं निवर्तयेदित्येव भाष्यार्थः, 'पाठश्चैव विशेष्यते' इत्यग्रिमभाष्यस्वरसादित्याहुः ।

निदर्शनार्थत्वादिति । तत्राऽवर्णस्य 'अ अ' इति कृतैव, तद्वत्तदनन्तरमन्येषामपि करिष्यामीति भावः । एतेनाऽवर्णप्रत्यापत्तेः कृतत्वाद्वक्ष्यामीत्यनुपपन्नमिति परास्तम् ।

भाष्ये—सा तर्हि वक्तव्येति । तथा च प्रत्यापत्त्याश्रयणे गौरवमिति भावः ।

---

‡ 'स्वरदोषगात्राणि' इति पाठान्तरम् । तथा च्वान्नंभट्टः—"भावनाशब्दार्थमाह—गात्राणीति, गात्रवत् प्रधानभूतानि; यथा शरीरस्यानेकविधा अवयवाः, तद्वत्तेषामप्यनेकभेदाः सन्तीत्यर्थः ।"

**लिङ्गार्था तु प्रत्यापत्तिः ॥ २४ ॥**

लिङ्गार्था सा तर्हि भविष्यति । तत्तर्हि वक्तव्यम् ? यद्यप्येतदुच्यते अथवैतर्हि अनेकमनुबन्धशतं नोच्चार्यमित्संज्ञा च न वक्तव्या, लोपश्च न वक्तव्यः । यदनुबन्धैः क्रियते तत्कलादिभिः करिष्यते । सिद्धयत्येवमपाणिनीयं तु भवति ।

यथान्यासमेवास्तु । ननु चोक्तम्—'आकृत्युपदेशात्सिद्धमिति चेत्संवृतादीनां प्रतिषेधः' इति । परिहृतमेतत्—'गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिर्भविष्यति'-इति । ननु चान्यद्गर्गादिविदादिपाठे प्रयोजनमुक्तम् । किम् ? समुदायानां साधुत्वं यथा स्यादिति । एवं तर्ह्युभयमनेन क्रियते—पाठश्चैव विशेष्यते, कलादयश्च निवर्त्यन्ते ।

कथं पुनरेकेन यत्नेनोभयं लभ्यम् ? लभ्यमित्याह । कथम् ? द्विगता अपि

---

**प्र०-यदनुबन्धैरिति** । यथा स्वरितत्वमधिकारार्थमेवमात्मनेपदाद्यर्थं कलादिकं प्रतिज्ञाय '**कलादात्मनेपद**'मित्यादि करिष्यते न त्व'**नुदात्तङित**' इत्यादि । ननु चानुबन्धाऽभावे कथमणादिका संज्ञा उपपद्यन्ते ? **आदिरन्त्येनेत्यत्रा'दिः कलैः सहे**'त्युक्त्वा 'अ—उ' इत्यादिकाः संज्ञा करिष्यन्ते, स्वरसन्धिश्चाऽसन्देहाय न करिष्यते इत्यदोषः ।

**उभयमिति** । यथाभूता गर्गादिस्था अकारादयस्तथाभूता एव सर्वत्र प्रयोक्तव्या

---

उ०—**लिङ्गार्था त्विति** । अनुबन्धस्थानीयतत्तद्धात्वादिगतकलादिलिङ्गनिवृत्त्यर्थेत्यर्थः । नाऽऽकृतिनिर्देशप्रयुक्तदोषपरिहारमात्रप्रयोजना प्रत्यापत्तिः, किं तु सर्वानुबन्धेत्संज्ञाशास्त्राद्यकरणफलिकापीति न गौरवमिति भावः ।

तदेव विवृणोति—**तत्तर्हीत्यादिना** । धात्वादिगतकलादिलिङ्गमित्यर्थः ।

**अथवैतर्हीत्यस्य**—तथापीत्यर्थः । **अनेकमनुबन्धशतमिति** । एकैकस्यानुबन्धस्य शतश उच्चारणं, तादृशाश्चाऽनेके उच्चारणीया इत्यर्थः । **यथेति** । एधत्यादयोऽनुदात्तङितः कलदोषयुक्ताः पाठ्याः । स्वरितञितश्च ध्माताः । तत्र '**कलादात्मनेपदम्**' '**ध्मातात्कर्तृगामिनि क्रियाफले**' इति सूत्रे कार्ये । एवं टुकितौ कलध्मातौ पठित्वा**थन्तौ कलध्माताविति** पाठ्यम् । एवं डित्वतोऽर्द्धकदोषयुक्तान् पठित्वा **अर्द्धकात् क्त्रिरिति** । **टि्वतश्च** ग्रस्तान्पठित्वा '**ग्रस्तादथु**'जित्यादि बोध्यम् । एते च कलादयः प्रक्रियादशायामेव । प्रयोगे तु शुद्ध एव, शास्त्रान्ते प्रत्यापत्तिकरणात् । '**आदिः कलैः सहे'ति** पाठः ।

भाष्ये—**अपाणिनीयमिति** । वर्णसमाम्नायसमर्थनाय प्रवृत्तस्य एकदोषपरिहाराय सकलशास्त्रस्य व्याख्यानसापेक्ष्यगुरुप्रकारेणाऽन्यथाकरणं **वृश्चिकभिये**—त्यादिन्याय आपततीति भावः ।

नन्वपठितेषु दोषनिवृत्तिर्न कृता स्यादत आह—**यथाभूता इति** । गर्गाद्यकारादिषु एकरूपेण **पठितेषु** तज्जातीया एव ते **सर्वत्र** साधव इत्यनुमातुं **शक्यत** इति भावः । भाष्ये—**पाठश्चैवेति** । **विशेष्यते**—तत्तत्प्रत्ययवैशिष्ट्येन बोध्यते इत्यर्थः । '**द्विष्ठानी**'त्यस्य द्वयोरर्थयोस्तिष्ठन्तीत्यर्थ इत्याह—**शब्दस्यापीति** । तत्र 'कः कीदृशो धावती'ति प्रश्ने—'**श्वेत**' इत्युत्तरम् । 'श्वा-इत' इति च्छेदेन 'क'

हेतवो भवन्ति । तद्यथा—'आम्राश्च सिक्ताः पितरश्च प्रीणिता' इति+ । तथा वाक्यानि द्विष्ठानि भवन्ति—'श्वेतो धावति' । 'अलम्बुसानां याते'ति ।

अथवा, इदं तावदयं प्रष्टव्यः—'क्वेमे संवृतादयः श्रूयेर'न्निति ? आगमेषु । आगमाः शुद्धाः पठ्यन्ते । विकारेषु तर्हि । विकारा अपि शुद्धाः पठ्यन्ते । प्रत्ययेषु तर्हि । प्रत्यया अपि शुद्धाः पठ्यन्ते । धातुषु तर्हि । धातवोऽपि शुद्धाः पठ्यन्ते । प्रातिपदिकेषु तर्हि । प्रातिपदिकान्यपि शुद्धानि पठ्यन्ते । यानि तर्हि ग्रहणानि प्रातिपदिकानि ? एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थं उपदेशः कर्तव्यः । 'शशः' 'षष' इति मा भूत्, 'पलाशः' 'पलाष' इति मा भूत्, 'मञ्चको' 'मञ्जक' इति मा भूत्× ।

प्र०—इति प्रतिपाद्यते इत्यर्थः । द्विगता इति । द्वावर्थौ गता—प्रयोजनद्वयसंपादका इत्यर्थः । तथा वाक्यान्यपीति । शब्दस्याप्यर्थवद्द्विगतत्वमित्यर्थः ।

अथ वेति । केवलानां वर्णानां लोके प्रयोगाभावाद्धात्वादीनां च शुद्धानां पाठात् तत्स्थत्वाच्च वर्णानां न कश्चिद्दोषः । यानि तर्हीति । डित्थादीनि । एतेषामपीति । शिष्टप्रयुक्तत्वेनोणादीनां पृषोदरादीनां च साधुत्वाभ्यनुज्ञानात्सर्वेषामत्र सङ्ग्रहः सिद्धः ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥ १ ॥

उ०—इत्यस्योत्तरम् । 'श्वेत' इतिच्छेदेन 'कीदृश' इत्यस्योत्तरमिदम् । एवं 'केषां जनपदानां गन्ता' 'को वा समर्थ' इति प्रश्ने उत्तरम्—अलमित्यादि । अलंबुसा देशविशेषाः । बुसानां—पलालवर्णानां याता प्रापिमान् अलं—समर्थ इति चार्थः । पातेति क्वचित्पाठः । 'पा रक्षणे' इत्यस्य रूपम् ।

+ एको मुनिस्ताम्रकराग्रहस्तो ह्याम्रेषु मूले सलिलं ददाति । आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया द्व्यर्थकरी प्रसिद्धा ॥ ( पद्मपुराणे सृष्टिखण्डे ११ । ६५ )

यथेक्षुहेतोः सलिलं प्रसेचितं तृणानि वल्लीरपि तन्निषिञ्चति । तथा क्रियाधर्मनिमित्तमार्जिता सुखार्थलाभेऽपि न धर्मतापिका ॥ ( न्यायमञ्जर्याम् )

अन्यत्रापि दृश्यतां भाष्ये—

"अथवा द्विगता अपि हेतवो भवन्ति । तद्यथा आम्राश्च सिक्ताः पितरश्च प्रीणिता भवन्ति तथा वाक्यान्यपि द्विगतानि दृश्यन्ते । श्वेतो धावति । अलम्बुसानां यातेति ।" ( ८ । २ । ३ )

"अथवा वृद्धकुमारीवाक्यवदिदं द्रष्टव्यम् । तद् यथा वृद्धकुमारीन्द्रेणोक्ता—वरं वृणीष्वेति । सा वरमवृणीत—पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्र्यां भुञ्जीरन्निति । न च तावदस्याः पतिर्भवति, कुतः पुत्राः, कुतो गावः, कुतो धान्यम् । तत्रानयैकेन वाक्येन सर्वं संगृहीतं भवति ।"

( व्या० महाभाष्ये ८ । २ । ३ )

× यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् । स्वजनः श्वजनो मा भूत् सकलं शकलं सकृत् शकृत् ॥
यस्य षष्ठी चतुर्थी च विहस्य च विहाय च । यस्याहं च द्वितीया स्याद् द्वितीया स्यामहं कथम् ॥

आगमाश्च विकाराश्च प्रत्ययाः सहधातुभिः ।
उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥ १ ॥

---

उ०—**केवलानामिति** । एवं च कलादिदोषाणां न कुत्रापि प्रसक्तिरिति भावः । भाष्ये—यानि **तर्हि ग्रहणानीति** । कार्यविधायकतानुवादानीत्यर्थः । **उपदेश इति** । **ङ्याप्प्रातिपदिका**दित्यादावनुवादरूपेण ग्रहणमित्यर्थः । एतेनो**द्देशश्च प्रातिपदिकानां नोपदेश इत्यादेश्च** इति सूत्रस्थभाष्यविरोध इत्यपास्तम् । नन्वेवमतिप्रसङ्गः स्यादत आह **शिष्टेति** । एवं **संवृतादीनां प्रतिषेध** इत्यस्मिन् प्रत्याख्याते **इष्टबुद्ध्यर्थ** इत्यपि प्रत्याख्यातप्रायमेवेत्यलम् ।

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पाद आद्यमाह्निकम् ॥ इति पस्पशाह्निकम्† ॥ १ ॥

---

† "... उपोद्घातत्वेनेदमाह्निकं चतुर्दशसूत्र्या अपि शास्त्रप्रवृत्त्यर्थत्वात् तत्समर्थनमुपोद्घात एव । अत एवेदं पस्पशाह्निकमित्युच्यते । शास्त्रारम्भसमर्थकोपोद्घातग्रन्थसन्दर्भस्य पस्पशाशब्देन वृद्धैर्व्यवहारात् ।

शास्त्रस्यारम्भको ग्रन्थ उपोद्घात इतीरितः । स एव ग्रन्थसन्दर्भः पस्पशः कथितो बुधैः ॥"

( इत्यन्नंभट्ट उद्द्योतने )

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना । शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥

( शिशुपालवधे २ । ११२ )

'पस्पशा शास्त्रारम्भसमर्थक उपोद्घातसन्दर्भग्रन्थः' इत्यत्र मल्लिनाथः ।

"पस्पशा । स्पश बाधनस्पर्शयोः । यङन्तादच् 'यङोऽचि च' [ २ । ४ । ७४ ] इति लुक् । 'अजाद्यतष्टाप्' [ ४ । १ । ४ ] इति टाप् । 'दीर्घोऽकितः' [ ७ । ४ । ८३ ] इत्यभ्यासस्य दीर्घस्तु न भवति । संज्ञापूर्वकविधेरनित्यत्वादित्याहु"रिति शब्दार्थचिन्तामणिः । एवमेव चास्य सिद्धिं चकार तत्त्वबोधिन्यां ज्ञानेन्द्रभिक्षुः ।

ऋग्वेदेऽपि 'पस्पशे' इति दृश्यते—"विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।" [१। २२। १९]

महाभाष्येऽपि दृश्यते—"पस्पशाते चाकशीमि वावशतीरिति प्रयोगो दृश्यते । कपोतः शरदं पस्पशाते ।" [ ७ । ३ । ८७ ]

शास्त्रेष्वाद्यं व्याकरणं, मुख्यं तत्रापि पाणिनेः । रम्यं तत्र महाभाष्यं, रम्या तत्रापि पस्पशा ॥

# अथ द्वितीयं प्रत्याहाराह्निकम्

## अ इ उ ण् ॥ १ ॥

### अकारस्य विवृतोपदेश आकारग्रहणार्थः ॥ १ ॥

**अकारस्य विवृतोपदेशः कर्तव्यः । किं प्रयोजनम् ? आकारग्रहणार्थः । अकारः सवर्णग्रहणेनाऽऽकारमपि यथा गृह्णीयात् ।**

---

**प्रदीपः**—**अइउण्** । सर्ववर्णानविशेषेण विचार्य विशेषेणात्र विचारः क्रियते—**अकारस्येति** । अत्राकारादीनां स्वरूपेणानुकार्येण वा सतोऽप्यर्थवत्त्वस्याऽविवक्षितत्वाद्विभक्त्यनुपपत्तिः । स्वरसन्धिस्तु न प्रवर्तते, वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात् । तत्राकारस्य संवृतत्वाद्दीर्घप्लुतयोर्विवृतत्वात् प्रयत्नभेदात् सवर्णसंज्ञाया अप्रसङ्गात्प्रदेशेष्वकारेण दीर्घप्लुतयोर्ग्रहणं न प्राप्नोतीति विवृतत्वमस्योपदिश्यते । विवृतस्य गुणस्योपदेशो विवृतोपदेशः । तत्र गुणस्य नित्यसापेक्षत्वादकारापेक्षत्वेऽपि समासः । यथा—'देवदत्तस्य गुरुकुल'मिति । **आकारग्रहणार्थ इति** । विवृतोपदेश आकार ग्रहणार्थ इति सामानाधिकरण्येन निर्देशादाकारग्रहणं 'विवृतोपदेशस्य प्रयोजन' मिति सामर्थ्यादवगमाच्चोद्यानुरूपमुत्तरं न भवतीति न चोदनीयम् । **सवर्णग्रहणेनेति** येन शास्त्रेणाणुदित्सवर्णस्येत्यनेन सवर्णा गृह्यन्ते तेन कारणेनेत्यर्थः ।

---

**उद्द्योतः**—ननु चतुर्दशसूत्र्याः प्रयोजनमुक्तमेव तत्किं पुनरत्र तद्ग्रहणेनेत्याशङ्क्याह—**सर्वेति** । **विशेषेण**—तत्तद्रूपेण । प्रत्येकं वर्णेभ्यो विभक्तिमाशङ्क्याह—**स्वरूपेणेति** । शब्दजन्यज्ञानविषयो हि शब्दस्यार्थः । एवं च स्वरूपमपि स्वजन्यबोधविषयत्वेनार्थः । अनुकार्यमर्थ इति तु स्पष्टमेव । एवं विद्यमानस्याप्यर्थवत्त्वस्याऽविवक्षितत्वादर्थवत्सूत्रेऽग्रहणादित्यर्थः । स्वरूपस्य श्रोत्रगृहीतस्यैव शाब्दे भानोपपत्तौ न तत्र शक्तिः कल्प्या । अनुकार्यं च सादृश्येनोपस्थापयतीति न तत्रापि वृत्तिः । वृत्त्यार्थबोधकत्वं चार्थवत्त्वमर्थवत्सूत्रे निविष्टमिति भावः । अनुकरणत्वभङ्गाच्च विभक्तिरिति तत्त्वम् । सौत्रत्वाद्वा । कारप्रत्ययोऽपि बाहुलकान्न । **स्वरसन्धिस्त्विति** । सौत्रत्वात्संहिताया अविवक्षणाद्वेतिभावः । **अजादिसञ्ज्ञानामनिष्पादादिति** तु चिन्त्यं, वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानाना यणादीना सुद्ध्युपास्य इत्यादौ तटस्थ इवोद्देश्यतावच्छेदकाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेर्दुर्वारत्वात् । अन्यथा 'तुल्यास्यप्रयत्न'-मित्यादौ सवर्णदीर्घादि न स्यात् । **अत्र**—**सूत्रे** । **तत्रेति** पाठेऽप्ययमेवार्थः । वाक्यपरिसमाप्तिन्यायेनेह ग्रहणकशास्त्राऽप्रवृत्तेः सावर्ण्येऽपि नात्र तद्ग्रहणमिति व्यर्थो विवृतोपदेशोऽत **आह**—**प्रदेशेष्विति** । **अकः सवर्णे** इत्यादौ । तत्राप्यकारः संवृत एवेतिभावः । ननु विवृतपदस्य गुणिपरत्वे सविशेषणत्वात्समासो न स्यादत आह—**विवृतस्य गुणस्येति** । भाष्ये **कर्तव्य** इत्यस्य प्रतिज्ञेय इत्यर्थः । एतेन तस्योच्चारयितुमशक्यत्वमित्यपास्तम् । भाष्ये **किं प्रयोजनमि**त्यत्र उद्दिश्येत्यध्याहारः । 'कर्तव्य' इत्यनुषङ्गश्च । नन्वाकारग्रहणं सवर्णग्रहणमेवेति भेदाभावात्कथं तस्य करणत्वमत आह—**येन शास्त्रेणेति** ।

**किं च कारणं न गृह्णीयात् ? विवारभेदात् ।**

**किमुच्यते—'विवारभेदा'दिति, न पुनः कालभेदादपि । यथैव ह्ययं विवार-भिन्न एवं कालभिन्नोऽपि ?**

**सत्यमेतत् । वक्ष्यति—'तुल्यास्यप्रयत्नं सवर्णम्' [ १ । १ । ९ ] इत्यत्रास्य ग्रहणस्य प्रयोजनम्—'आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्ती'ति । बाह्यश्च पुनरास्यात्कालः । तेन स्यादेव कालभिन्नस्य ग्रहणं न पुनर्विवारभिन्नस्य ।**

**प्रदीपः—किं च कारणमिति** । आकृतिपक्षाश्रयेण ग्रहणकशास्त्रस्य प्रत्याख्यानादाकारस्याप्यत्वजातिसद्भावात्सिद्धं ग्रहणमिति भावः । अत्र च 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शन'मिति प्रथमा कृता तेन कस्मात् कारणादित्यर्थ सम्पद्यते ।

**विवारभेदा**दित्यत्र तु कारणशब्दप्रयोगाभावात्प्रायग्रहणादसर्वनाम्नो वा प्रथमाद्वितीययोरभावाद्विभाषागुणेऽस्त्रियामिति पञ्चमी विहिता । विवारयति विकासयति आस्यमिति **विवारः**—प्रयत्नः । व्यक्तिपक्षे ग्रहणकशास्त्रारम्भाद्दोषापत्ति ।

व्यक्तिपक्षे भेदान्तरसद्भावादाह—**किमुच्यत इति** ।

**बाह्यश्चेति** । प्रयत्नाभिनिर्वृत्तत्वात्कालस्य प्रयत्नत्वमभ्युपगम्य शङ्का । बाह्यत्वेन परिहारः । प्रसिद्धपरिमाणवस्त्वन्तरगतपरिच्छेदकक्रियान्तरापेक्षणात्कालव्यवहारस्य—बाह्यत्वं कालस्य । यथा व्रीहेः प्रस्थादिव्यवहारः परिमाणद्रव्यकृतः, एवमत्रापि मात्रादिव्यपदेशो निमेषादिक्रियाभेदकृत । अथ वा नाभिप्रदेश एव विशिष्टप्रयत्नारम्भाद्दीर्घादिनिष्पत्त्या नाभेश्चाऽस्याद्बाह्यत्वात्कालस्य बाह्यत्वम् । विवृतत्वादीना चाऽऽस्यवर्त्तिप्रयत्ननिष्पाद्यत्वादाभ्यन्तरत्वम् । द्रुतादिवृत्तयस्तु यथा न भेदकास्तथा **तपरसूत्रे** वक्ष्यते ।

**उद्द्योतः**—नन्वाकृतिभेदात्कथ तत्पक्षेऽप्यकारेणाऽऽकारग्रहणमत आह—**आकारस्यापीति** । केवलकण्ठ्यत्वे सति स्वरत्वमत्वजातिव्यञ्जकमिति दीर्घप्लुतयोरपि सेति भावः । प्रातिपदिकार्थमात्रे प्रथमाया यथाश्रुतेऽन्वयो न जायतेऽत आह—**अत्र चेति** ।

उत्तरेऽपि तर्हि प्रथमा कुतो नेत्यत आह—**प्रयोगाभावादिति** । निमित्तादिशब्दप्रयोगाभावेऽपि तदर्थे गम्यमाने स्यादेव विभक्तिरत आह—**प्रायग्रहणादिति** । **विभाषा गुणे इति** ।

**निमित्ते**त्यादि वार्त्तिके सर्वासामित्येतन्न पञ्चमीतृतीयाविधायकं किं तु **हेताविति विभाषा गुणे**ति-सिद्धयोस्तयोरन्याभिरबाधायानुवादकमेवेति भावः । **विवारयतीति** । सचाभ्यन्तरप्रयत्नः । **दोषापत्तिः** । दण्डाढकमित्यादौ दीर्घानापत्तिर्दोष इत्यर्थः । ननु प्रयत्नभेदेऽपि जातिसद्भावात्स्यादेव ग्रहणमत उक्तं—**व्यक्ति पक्ष** इति ।

ननु कालस्य व्यापकत्वाद्बाह्यत्वेन समाधानमयुक्तम् । किं च 'कालो न प्रयत्न' इति तद्भेदे कथं सवर्णत्वाऽप्राप्तिरत आह—**प्रयत्नाभिनीति** । बाह्यत्वं व्युत्पादयति—**प्रसिद्धेति** । प्रसिद्धपरिमाणं यद्वस्त्वन्तरगतं परिच्छेदकक्रियान्तरं,—परिच्छेद्यक्रियापेक्षयान्यत्तदपेक्षणादित्यर्थः । एवं च बाह्यपरिच्छेदकक्रियापेक्षया बाह्यत्वोक्तिरिति भावः । 'क्रियैव कालो नातिरिक्त' इति मते इदम् । 'अतिरिक्तः क्षणसमूहः काल' इति मते परिहरति—**अथ वेति** । अयं भावः—नाभिप्रदेशावच्छिन्नप्रयत्नेन प्रेरितो वायुस्तत्तत्स्थानाभिघातोत्तरं

इति तस्याऽनुकुर्वन्नपशब्दं प्रयुञ्जीत, सोऽप्यपशब्दभाक्स्यात् । अयं त्वन्योऽपशब्दपदार्थकः शब्दो, यदर्थ उपदेशः कर्तव्यः । न चाऽपशब्दपदार्थकः शब्दोऽपशब्दो भवति । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते'ऽपशब्दपदार्थकः शब्दोऽपशब्दो भवती'ति, 'अपशब्दः' इत्येव तस्याऽपशब्दः स्यात् । न चैषोऽपशब्दः ।

अयं खल्वपि भूयोऽनुकरणशब्दोऽपरिहार्यो यदर्थ उपदेशः कर्तव्यः—[1] 'साध्वॢकारमधीते' 'मध्वॢकारमधीत' इति । कस्थस्य पुनरेतदनुकरणम् ? कॢपिस्थस्य । यदि कॢपिस्थस्य,—कॢपेश्च लत्वमसिद्धं तस्याऽसिद्धत्वादृकार एवाऽच्कार्याणि भविष्यन्ति । भवेत्तदर्थेन नार्थः स्यात् । अयं त्वन्यः कॢपिस्थपदार्थकः शब्दो यदर्थ उपदेशः कर्तव्यः । न कर्तव्यः । इदमवश्यं कर्तव्यम्'—'प्रकृतिवदनुकरणं भवति' इति । किं प्रयोजनम् ? 'द्विः पचन्त्वित्याह' । 'तिङ्ङतिङः'

प्र०—स्वस्थचित्तत्वं दर्शयति । अस्वस्थेन हि चित्तेनाऽकार्यं क्रियते । माल्यगुणकण्ठ इति । लोकमध्ये प्रकाशते इत्यर्थः । अकार्यं ह्यप्रकाशं क्रियते । तत्र लतकशब्दोऽपि यदा ऋतकाऽर्थे प्रयुज्यते तदाऽपशब्दो, यदा त्वनुकार्यं प्रत्याययति तदा साधुरेवाऽर्थभेदादस्वगोण्यादिवत् ।

अपशब्द इत्येवेति । अस्य हि गाव्यादयोऽपभ्रंशा वाच्याः । अयमिति । असाधोरनुकरणमित्येतदप्यत्र नास्तीति भावः । भवेदिति । प्रयोगस्थस्येदमनुकरणम् । प्रयोगे च 'पूर्वत्रासिद्ध'मिति नास्तीति भावः ।

प्रकृतिवदिति । तत्र यथा कॢपेर्लत्वस्याऽसिद्धत्वादृकारद्वारेण ॢकारस्याऽच्कार्यं तथानुकरणस्यापीत्यर्थः । द्विरिति । 'पचन्तु पचन्त्वि'ति केनचिदुक्ते द्विःपचन्त्वित्यनुकरणम् । एतच्च क्रियासाधनाद्यनभिधानात्तिङन्तं न भवति । एवमग्नी इत्यनुकरणं द्व्यर्थानभिधानान्न द्विवच-

उ०—साधूनि माल्यानि पुष्पाणि । तैर्युक्तो गुणः-सूत्रं कण्ठे यस्येत्यर्थः । गड्वादित्वात्परनिपातः । अकार्यं हीति । इह लोके भीरुणेत्यर्थः । अर्थभेदेन साधुत्वे दृष्टान्तमाह—अस्वेति । भाष्ये प्रयोजनप्रत्याख्यानवादी शङ्कते—एवमिहापीति । प्रयोजनवादी समाधत्ते—अयं त्वन्य इति । अस्य हीति । एवं च तत्तदर्थे व्याकरणाननुगतत्वमपशब्दत्वमिति भावः ।

भाष्ये तुष्यतु दुर्जनन्यायेन साध्वनुकरणार्थत्वमॢकारोपदेशस्याह—अयं खल्वपीति । यद्यप्यर्थशून्यवर्णानां न साधुत्वम्, तथापि वर्णोत्कारविधानेन तेषां साधुत्वमिति भावः ।

भवेत्तदर्थेनेति । तदर्थेन—कॢपिस्थॢकारार्थेन ॢकारस्योपदेशेन प्रयोजनं न भवति—एवं यद्यपि भवेत्तथापि तदनुकरणार्थेनाऽर्थ इत्यर्थः । ननु कॢपिस्थस्यासिद्धत्वात्कथं तदनुकरणमत आह—प्रयोगस्थस्येति । प्रयोगे—अनुकरणप्रयोगे । शास्त्रे तदीयकार्ये वाऽसिद्धत्वं, पौर्वापर्यस्य तत्रैव संभवात् । न चैवं प्रकृते इति भावः ।

ऋकारद्वारेणेति । ऋकारबुद्ध्येत्यर्थः । भाष्ये—द्विः पचन्त्विति । पचन्त्विति द्विराहेत्यन्वयः ।

१ वक्तव्यमिति कीलहार्नसम्मतः पाठः ।

[ ८ । १ । २८ ] इति निघातो यथा स्यात् । 'अग्नी इत्याह' । 'ईदूदेद्द्विवचनं प्रगृह्यम्' [ १ । १ । ११ ] इति प्रगृह्यसंज्ञा यथा स्यात् ।

यदि—'प्रकृतिवदनुकरणं भवती'त्युच्यते, अपशब्द एवाऽसौ भवति 'कुमार्य्लृतक इत्याह' 'ब्राह्मण्य्लृतक इत्याह' । अपशब्दो ह्यस्य प्रकृतिः । नचाऽपशब्दः प्रकृतिः । नह्यपशब्दा उपदिश्यन्ते, न चाऽनुपदिष्टा प्रकृतिरस्ति ।

'एकदेशविकृतस्यानन्यत्वात्प्लुत्यादयः ॥ ४ ॥

'एकदेशविकृतमनन्यवद्भवति' इति प्लुत्यादयोऽपि भविष्यन्ति । यदि 'एकदेश-

---

प्र०—नान्तम् । ननु गम्लृ सृप्लृ इत्यादिस्थस्य यदनुकरणं तदा कथं प्रकृतिवद्भावः ? घृताद्य्लृदित इति लृकारे परतो यणादेशकरणादित्संज्ञानुवादाच्च धात्वानुबन्धस्य लृकारस्याऽच्कार्याण्यनुमीयन्ते ततस्तदनुकरणस्य सिद्धः प्रकृतिवद्भावः ।

नचाऽपशब्द इति । सिद्धान्तवादी । प्रकरणाद्धि शास्त्रीया प्रकृतिराश्रीयते, शास्त्रनिबन्धनं च कार्यमतिदिश्यते, अपशब्दश्च न शास्त्रीया प्रकृतिरनुपदिष्टत्वात् । नचाऽपशब्दत्वं शास्त्रीयं कार्यं, नापि तदतिदेष्टुं शक्यम् । नहि माघोर्माघुत्वातिदेशो युक्तिमान् । तदेवं भाष्यकारेणाऽशक्तिजानुकरणार्थत्वमॢकारोपदेशस्य स्थापितम् ।

एकदेशविकृतस्येति । ऋकारे रेफभागस्य लत्वे कृते स एव ऋकार इति प्रत्यभि-

---

उ०—असत्यतिदेशे तिङन्तत्वाऽभावे हेतुमाह—एतस्येति । द्व्यर्थेति । एतदर्थमेव 'द्विवचन' मित्यन्वर्थसंज्ञाकरणम् । नन्विति । एवं च पाठाभावे मूलस्यैवाऽच्त्वाभावात्कथं तदनुकरणेऽच्कार्यमिति तदर्थं उपदेश आवश्यक इति भावः । अनुमीयन्त इति । इदं चिन्त्यम् । आनुमानिकवचनेन कृतस्य वर्णस्य प्रत्याख्यानाऽयोगात् । तस्माद्गम्लृ इत्यादिस्थ लृकारो धर्माजनकत्वान्न साधुरिति वक्तुंयुक्तम् । एवं चाऽशक्तिजानुकरणेति वार्तिकेऽशक्तिजपदं व्यर्थमिति कैयटतात्पर्यम् ।

एवं साध्वनुकरणार्थत्वे लृकारोपदेशस्य प्रकृतिवदित्याश्रयणेन खण्डिते तेनैवाऽशक्तिजानुकरणार्थत्वमपि खण्डयति पूर्वपक्षी भाष्ये—यदि प्रकृतिवदिति ।

ननु मा भूदपशब्दोपदेशः, प्रकृतित्वं तु कथं नेत्यत आह—प्रकरणादिति । अतिदेशस्य शास्त्रीयत्वमनेन दर्श्यते । तत्र च प्रत्यासत्त्या शास्त्रीयप्रकृत्यादेरेव ग्रहणमुचितमिति भावः । उपलक्षणं भाष्यमित्याह—शास्त्रनिबन्धनं चेति । 'नापि तदतिदेष्टु'मित्यादि चिन्त्यम् । अब्राह्मणे ब्राह्मणत्वाद्यतिदेशवत्संभवादिति कश्चित् । तदेवमिति । अशक्तिजस्य शास्त्रीयप्रकृतित्वाभावान्न तदनुकरणेऽतिदेशप्रवृत्तिरित्यपशब्दत्वाभावादच्कार्यसिद्ध्यर्थं लृकारोपदेश इत्यर्थः ।

इदानीं प्लुत्याद्यर्थत्वं तस्य परिहरति भाष्ये—एकदेशेति । रेफभागस्येति । वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति पक्षे इत्यर्थः । प्रत्यभिज्ञानादिति । एवं च छिन्नपुच्छश्वदृष्टान्तेन लोकन्यायसिद्धमस्य एव

विकृतमनन्यवद्भवती'—त्युच्यते, 'राज्ञः क च' [ ४ । २ । १४० ] राजकीयम् 'अल्लोपोऽनः' [ ६ । ४ । १३४ ] इति लोपः प्राप्नोति । एकदेशविकृतमनन्यवत्षष्ठीनिर्दिष्टस्येति वक्ष्यामि । यदि—'षष्ठीनिर्दिष्टस्ये'त्युच्यते, 'कॢ३प्तशिख' इति प्लुतो न प्राप्नोति । नह्यत्र ऋकारः षष्ठीनिर्दिष्टः । कस्तर्हि ? रेफः ।

ऋकारोऽप्यत्र षष्ठीनिर्दिष्टः । कथम् ? अविभक्तिको निर्देशः—कृप उः रः लः 'कृपो रो लः' [ ८ । २ । १८ ] इति ।

अथवा पुनरस्त्वविशेषेण । ननु चोक्तं—'राज्ञः क च' राजकीयम् 'अल्लोपोऽनः' इति लोपः प्राप्नोतीति । नैष दोषः । वक्ष्यत्येतत्—'श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम्'† इति । तत्प्रकृतमुत्तरत्राऽनुवर्तिष्यते—'अल्लोपोऽनः' नकारान्तस्येति । इह तर्हि—कॢ३प्तशिख 'अनृत' इति प्रतिषेधः प्राप्नोति× ।

---

प्र०—ज्ञानादिति भाव' ।

**षष्ठीनिर्दिष्टस्येति** । '**राज्ञः क चे**'त्यत्र राजन्शब्दः षष्ठीनिर्दिष्टो न त्वन्निति लोपाऽभावः ।

यद्येवं **कृपो रो ल** इत्यत्रापि ऋकारः षष्ठ्या न निर्दिष्ट इत्यनन्यत्वं न प्राप्नोतीत्याह—**यदीति** । **अथवेति** । 'षष्ठीनिर्दिष्टस्ये'ति नापेक्ष्यते । **नकारान्तस्येति** । न च राजन्शब्दः कादेशे कृते नकारान्तो भवति, श्वेव पुच्छे छिन्ने नपुच्छवानिति भावः ।

---

उ०—मित्यर्थः । व्याख्यानभाष्ये **अनन्यवदि**त्यस्याऽन्यवन्नेत्यर्थः । अन्यसादृश्यस्याऽपि निषेधे तत्त्वं दृढीकृतम् ।

सिद्धान्त्येकदेशी वति दृष्ट्वा **स्थानिवत्सूत्रमनेनोपन्यस्तमित्याशयेनाह**—**षष्ठीनिर्दिष्टस्येति** । तत्सम्बन्ध्येकदेशविकृतमादेशरूपमित्यर्थः । नन्व**ल्लोपोऽन** इत्यत्राऽन्नपि षष्ठीनिर्दिष्ट एवेत्यत आह—**राज्ञ इति** । येन विकारेण यस्य विकृतस्य यद्रूपमेकदेशविकृतन्यायेन प्राप्यते तद्रूपावच्छिन्नस्य तेन रूपेण तद्विकारविधौ षष्ठीनिर्दिष्टस्येति तदर्थ इति भावः ।

**भाष्ये—प्लुतो न प्राप्नोतीति**, द्विर्वचनादेरप्युपलक्षणम् । **कस्तर्हि रेफ इति** । 'कृप' इति त्ववयवषष्ठीति भावः ।

**कृप उरिति** । कृपे रेफस्य लस्तदवयवऋकारस्य च लकारघटित आदेश इत्यर्थः । स्थानिनिर्देश एव तादृशादेशकल्पक इति भावः । एतेन तस्यावयवषष्ठ्यन्तत्वेन स्थानषष्ठीनिर्दिष्टत्वाऽभावादिदं चिन्त्यमित्यपास्तम् ।

ननु **स्थानिवत्सूत्रे** हि तथा, प्रकृते च न तन्नातिदेश उच्यते, किं तु छिन्नपुच्छश्वदृष्टान्तेन प्रत्यभिज्ञयाऽनन्यत्वमुच्यते । तत्र 'षष्ठीनिर्दिष्टस्ये'ति वक्तुमेवाऽशक्यमित्याशयेनाह भाष्ये—**अथवेति** ।

ननु कादेशेऽन्त्वमिवैकदेशविकृतन्यायेन नकारान्तत्वमपि कुतो नेत्यत आह—**न च राजन्निति** । एकदेशपदेन ससम्बन्धिकतयोपस्थितावयविधर्म एव विकारविशिष्टे आरोप्यते, न त्ववयव एव, लोकव्यवहारादिति भावः ।

---

† ६ । ४ । १३३ × ८ । २ । ८६

**रवत्प्रतिषेधाच्च ॥ ५ ॥**

रवत्प्रतिषेधाच्चैतत्सिध्यति । 'गुरोररवतः' इति वक्ष्यामि । यदि 'अरवतः' इत्युच्यते, होतृ ऋकार 'होतृ३कार' अत्र न प्राप्नोति । 'गुरोररवतो ह्रस्वस्ये'ति वक्ष्यामि ।

स एष सूत्रभेदेन-ऌकारोपदेशः प्लुत्याद्यर्थः सन्प्रत्याख्यायते, सैषा महतो वंशस्तम्बाल्लट्वानुकृष्यते ॥ २ ॥

**एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥**

इदं विचार्यते—इमानि सन्ध्यक्षराणि तपराणि वोपदिश्येरन् 'एत् ओतङ्' 'ऐत् औतच्' इति, अतपराणि वा यथान्यासमिति । कश्चात्र विशेषः ?

---

**प्र०—अरवत इति** । रोऽस्यास्ति नित्यमिति नित्ययोगे मतुप् । तेन ऋकार एव रवान् न तु वर्त्तक इत्यादावकारः । न रवान्—अरवानिति समासः । नित्ययोगप्रतिपादनाय बहुव्रीहिर्न कृतो—**गुरोररस्येति** । **ह्रस्वस्येति** । तेन ह्रस्वस्यैव रवत प्लुतनिषेधो न दीर्घस्य । वार्तिककारस्य ऌकारप्रत्याख्यानं निष्प्रयोजनमित्याह—**सैषेति** ।

**एओङ् । ऐऔच् । इदं विचार्यत इति** । तपराऽतपरसन्ध्यक्षरोपदेशो विचार्यत इत्यर्थः । तत्रोपदिश्येरन्नित्यत्राऽसत्त्वभूता यद्यपि क्रियाभिधीयते, तथापि बुद्ध्या परामृष्टा सत्त्वरूपतामापादिता विचारक्रियायां कर्मभावमनुभवति यथा 'पश्य मृगो धावती'ति सरणं दर्शने ।

**कश्चात्रेति** । कार्ये को विशेष इति प्रश्नः ।

उ०—भाष्ये **इह तर्हीति** । **एकदेशविकृतन्यायेन** ऋत्वादिति भावः । **रोस्यास्तीति** । इदं चिन्त्यम्-अवयवादावेव मत्वर्थो नानन्तरादाविति वर्त्तक इत्यादौ रवत्त्वस्योपपादयितुमशक्यत्वान्नित्ययोगपर्यन्तधावनमफलमिति ।

भाष्ये **स एष इति** । प्लुत्याद्यर्थं विद्यमान ऌकारोपदेशोऽरवतो ह्रस्वस्येति गुरुन्यासरूपसूत्रभेदेन प्रत्याख्यायत इति यत्तदयुक्तमित्यर्थः । कुत इत्यत आह—**सैषेति** । यत सैषा प्रत्याख्यानात्मिका उक्तिर्महतो वंशस्तम्बाल्लट्वानुकर्षोऽभिन्नेत्युक्ते यथा महतो वंशस्तम्बाल्लट्वानुकर्षणमयुक्तमेवम् ऌकारप्रत्याख्यानमिति गम्यते । तदाह—**निष्प्रयोजनमिति** । सूत्रभेदपरिकल्पनं विना कॢ३प्तशिखे प्लुतसाधनस्याऽशक्यत्वान्निष्प्रयोजनमित्यर्थः । **वंशस्तम्बादिति** । ल्यब्लोपे पञ्चमी । तमवलम्ब्येत्यर्थः । **लट्वा**† पक्षिविशेषः, फलविशेषो वा । तद्यथा बह्वायाससाध्यमल्पफलं न युक्तं तथा ऌकारोपदेशप्रत्याख्यानमपीत्यर्थः ॥ २ ॥

**एओङ् । ऐऔच् । विचार्यतइति** । कृत्वाचिन्तान्यायेनाऽयं विचार इति बोध्यम् । इदपदार्थमाह—**तपरेति** । **असत्त्वभूतेति** । एवंन्नेदमा परामर्शोऽनुपपन्न इति भावः । **बुद्ध्या परामृष्टेति** । उपदेशपदार्थभूतेत्यर्थः । **कर्मभावमिति** । इदंपदवाच्यत्वेनेति भावः । **यथेति** । इदं चिन्त्यम् । कर्तृकर्मेतरकारकाऽभाववत्त्वस्यैवाऽसत्त्वपदार्थत्वात् ।

पक्षद्वये स्वरूपवैलक्षण्यस्यानुभवसिद्धत्वेन तद्विषयः प्रश्नोऽनुचितोऽत आह —**कार्य इति** ।

---

† 'लट बाल्ये' इति धातोः 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' इत्यौणादिके क्वनि नेड्वशिकृति' इतीडभावः । 'लट्वाकरञ्जभेदे स्यात् फले वाद्ये खगान्तरे' इति मेदिनी । नाटाकरञ्ज इति भाषायाम् । पक्षिविशेषे—ग्रामचटकः ।

**सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणम् ॥ १ ॥**

सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणं कर्तव्यम् ।

**प्लुत्यादिष्वाज्विधिः ॥ २ ॥**

प्लुत्यादिष्वजाश्रयो विधिर्न सिध्यति । गो३त्रात नौ३त्रात इत्यत्र 'अनचि च' [ ८ । ४ । ४७ ] इत्यच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं न प्राप्नोति । इह च 'प्रत्यङ्ङै३तिकायन' 'उदङ्ङौ३पगव' इत्यचि [ ८ । ३ । ३२ ] इति ङमुण्न प्राप्नोति ।

**प्लुतसंज्ञा च ॥ ३ ॥**

प्लुतसंज्ञा च न सिध्यति । ऐ३तिकायन, औ३पगव । 'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' [ १ । २ । २७ ] इति प्लुतसंज्ञा न प्राप्नोति । सन्तु तर्ह्यतपराणि ।

**अतपर एच इग्घ्रस्वादेशे ॥ ४ ॥**

यद्यतपराणि 'एच इग्घ्रस्वादेशे' [ १ । १ । ४८ ] इति वक्तव्यम् । किं प्रयोजनम् ? एचो ह्रस्वादेशशासनेष्वर्ध एकारोऽर्ध ओकारो वा मा भूदिति ।

---

**प्र०—तपरोपदेशश्चेदिति** । यद्यप्युपदेश उच्चारणं तथापि तपरोपदेशे फलं चेदस्ति ततस्तपरोच्चारणं कर्तव्यमित्यर्थः । **सन्ध्यक्षराणी**त्यन्वर्था पूर्वाचार्यसंज्ञा, सन्धीयमानावयवत्वात् ।

**प्लुत्यादिष्विति** । प्लुतसंज्ञामभ्युपगम्या'ऽच्कार्याणि न सिध्यन्ती'त्युच्यते ।

प्लुत एव न प्राप्नोतीति दर्शयितुमाह—**प्लुतसंज्ञा चेति** । त्रिमात्रस्याऽचः प्लुतसंज्ञा विधीयते, तपरत्वे च त्रिमात्रस्याऽग्रहणादच्त्वाऽभावः । तत्रैवां प्लुतो विधीयमान इकारोकाराभ्यां गृहीत ईकार ऊकारश्च स्यात् ।

**अतपर इति** । असतीह तपरत्वे एकारौकाराभ्यां मात्रिकयोरर्धैकारार्धौकारयोर्ग्रहणादच्त्वाद्ध्रस्वत्वाद्विधानं स्यादिति सूत्रं कर्तव्यम् । तपरत्वे तु तयोरग्रहणात्प्राप्त्यभाव. ।

---

**उ०**—भेदाऽभावादुद्देश्यविधेयभावोऽनुपपन्न इत्याशङ्क्य परिहरति—**यद्यपीत्यादि** । **फलं चेदिति** । संप्रदाने घञिति भावः । फलस्यैव करणत्वविवक्षया करणे घञित्यन्ये । **सन्धीयमानावयवत्वादिति** । 'अ इ उ'णिति शिष्यमाणवर्णसदृशावयवसन्धानेनाऽस्य निष्पन्नत्वादित्यर्थः । भाष्ये प्लुतिग्रहणं त्रिमात्रपरम् । आदिना चतुर्मात्रग्रहणम् ।

**नन्वोमभ्यादाने** इत्यादिनान्तरतमपरिभाषासंस्कृतेनैज्रूपप्लुतविधानादनच्त्वेपि तेषां **प्लुतसंज्ञा** भविष्यतीत्यत आह—**तत्रैवामिति** । ताभ्यामपि तषां यथाकथंचिदान्तरतम्यसत्त्वादिति भावः ।

भाष्ये **अर्ध एकार इति** । मात्रिकत्वेनाऽर्धत्वम् । समांशवाचिनोऽपि पुंस्त्वमेतद्भाष्यप्रामाण्यात् ।

**ननु च यस्यापि तपराणि, तेनाप्येतद्वक्तव्यम् । इमावैचौ समाहारवर्णौ मात्राऽवर्णस्य, मात्रेवर्णोवर्णयोः, तयोर्ह्रस्वादेशशासनेषु कदाचिदवर्णः स्यात् कदाचिदिवर्णोवर्णौ, मा कदाचिदवर्णो भूदिति ।**

**प्रत्याख्यायत एतत्, "ऐचोश्चोत्तरभूयस्त्वात्"† इति । यदि प्रत्याख्यानपक्षः, इदमपि प्रत्याख्यायते, "सिद्धमेङः सस्थानत्वात्"† इति । ननु चैङः सस्थानतरावर्ध एकारोऽर्ध ओकारश्च । न तौ स्तः । यदि हि तौ स्यातां तावेवाऽयमुपदिशेत् ।**

**ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते—'सुजाते एश्वसूनृते' 'अध्वर्यो ओद्रिभिः सुतम्' 'शुक्रं ते एन्यद्' 'यजतं ते एन्यत्'—इति ।**

प्र०—**ननु चेति** । सूत्रारम्भं प्रति न कश्चिद्दोष इत्यर्थः । अतपरत्वे 'एच्' इति वक्तव्यं, तपरत्वे तु 'ऐच्' इति । ऐचोर्विश्लिष्टाऽवर्णत्वात्संश्लिष्टावर्णावद्धैकाराद्धौकारौ न भवतः ।

**ऐचोश्चेति** । अर्धमात्राऽवर्णस्याऽध्यर्धमात्रेवर्णोवर्णयोर्भूयसा च व्यपदेशो मल्लग्रामादिवदिनीकारोकारावेव भविष्यतः ।

**सिद्धमेङ इति** । अर्धेकारार्धोकारौ न स्तः, तत्र तालव्य एकार ओष्ठ्य ओकार इति तयोः स्थाने इकारोकारावेव भविष्यतः ।

**तावेवेति** । ताभ्यामुपदिष्टाभ्यां दीर्घप्लुतयोरपि ग्रहणं सिध्यतीति भावः । गुणसंज्ञाया तु दीर्घावेवैकारोकारौ निर्देश्यौ ।

**सुजात इति** । अन्तःपादस्थस्याऽव्यपरस्याऽकारस्यार्धमेकारमर्धमोकारं च विदधति ।

उ०—भाष्ये **तेनाप्येतद्वक्तव्यमि**त्यत्र एतच्छब्देन नियामकं सूत्रं परामृश्यते । सूत्रन्यासभेदेऽपि गुरुलाघवकृतो विशेषो नास्तीत्याह—**सूत्रारम्भं प्रतीति** । **विश्लिष्टेति** । उपलभ्यमानेत्यर्थः । **संश्लिष्टेति** । स्पष्टमनुपलभ्यमानेत्यर्थः । एवं चैङ्विषये नाऽवर्णप्राप्तिः । अर्द्धङोस्तु तपरनिर्देशेऽनत्त्वाद्ध्रस्वत्वमेव नेति भावः । एङोः शुद्धतालव्यादित्वमेवेति न तयोः स्थानेऽवर्णप्राप्तिरिति तत्त्वम् । **संश्लिष्टावर्णा**विति कैयटस्याप्यत्रैव तात्पर्यम् ।

भाष्ये **प्रत्याख्यायत एतदिति** । **एतत्**—एज्विषयमेच इगिति सूत्रम् । वर्तमानसामीप्ये लट् । **भूयसा चेति** । तद्द्वारकभूयःस्थानसाम्यादित्यर्थः ।

भाष्ये **इदमपीति** । एङ्विषयमपीत्यर्थः । **सस्थानत्वादिति** । इकारोकाराभ्यां समानस्थानत्वादित्यर्थः । तदाह—**तालव्य इति** । तालव्य एवेत्यर्थः । इदं च मतमष्टमेऽपि भाष्ये स्पष्टम् । '**शब्दपरविप्रतिषेधेनो**त्तरभागसदृश' इति **विवरणोक्तं** तु चिन्त्यम् । अन्तरङ्गत्वेन पूर्वसदृशस्यैवाऽऽपत्तेः । स्पष्टं चेदं '**नित्य परयणादेशः**' इत्यादिना '**अचः परस्मिन्नि**'त्यत्र भाष्ये ।

भाष्ये—**तावेवेति** । लाघवादिति भावः । **ग्रहणमिति** । प्रदेशेष्विति शेषः । नन्वेवं मात्रिकयोरेव गुणसंज्ञा स्यादत आह-**गुणेति** । एवमपि अत्र ह्रस्वपाठेऽर्धमात्रालाघवं भवति ।

**अकारस्यार्धमिति** । 'सुजाते ए अश्वे'ति अकारलेखस्तु प्रामादिकः ।

† १ । १ । ४८.*

पारिषदकृतिरेषा[१] तत्रभवताम् । नैव हि लोके नान्यस्मिन्वेदेऽर्ध एकारोऽर्ध ओकारो वाऽस्ति ।

## एकादेशे दीर्घग्रहणम् ॥ ५ ॥

एकादेशे दीर्घग्रहणं कर्तव्यम्—'आद्गुणो [ ६ । १ । ८७ ] दीर्घः,'वृद्धिरेचि [ ८८ ] दीर्घः' इति । किं प्रयोजनम् ? आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा इन्द्रः खट्वेन्द्रः, खट्वा उदकं खट्वोदकम्, खट्वा ईषा खट्वेषा, खट्वा ऊढा खट्वोढा, खट्वा एलका खट्वैलका, खट्वा ओदनः खट्वौदनः, खट्वा ऐतिकायनः खट्वैतिकायनः, खट्वा औपगवः खट्वौपगव इति ।

तत्तर्हि दीर्घग्रहणं कर्तव्यम् ? न कर्तव्यम् । उपरिष्टाद्योगविभागः करिष्यते—'अकः सवर्णे' अकः सवर्णे एको भवति । ततो-'दीर्घः', दीर्घश्च स भवति यः स 'एकः पूर्वपरयोः' इत्येव निर्दिष्ट इति* । इहापि तर्हि प्राप्नोति-पशुं, विद्धं, पचन्तीति । नैष दोषः । इह तावत्पशुमिति, 'अम्येकः' इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति† तस्यैतत्प्रयोजनम्—'यथाजातीयकः पूर्वस्तथाजातीयक उभयोर्यथा स्या'दिति । 'विद्ध'मिति, 'पूर्व'इत्येवानुवर्तते‡ । अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'नानेन संप्रसारणस्य दीर्घो भवती'ति यदयं हल उत्तरस्य संप्रसारणस्य दीर्घत्वं

प्र०—पारिषदकृतिरिति । गीतिवशात्तथोच्चारणमित्यर्थः ।

आन्तर्यत इति । अन्यस्याऽसम्भवादिदमत्र नास्ति—'प्लुतश्च विषये स्मृत' इति ।

अम्येक इति 'प्रथमयो'रिति सिद्धे एतदपि किमर्थमुच्यत इति चेद्वा छन्दसीत्यत्रानुवृ-

उ०—शास्त्रविशेषाध्यायिनां समवायः परिषत्, पर्षद्वा । तत्र भवा कृतिरित्यर्थः ।

तदेवमतपरतपरवादिमतसाधारण्येनैचइगिति सूत्रस्य कर्तव्यताऽकर्तव्यते उपपाद्याऽतपरवादिमतेऽसाधारणं दूषणमाह भाष्ये—**एकादेशे इति** । '**एकः पूर्वपरयोर्दीर्घ**'इति **सूत्रं** कार्यमित्यर्थः. **अन्यस्यासंभवादिति** अयं भावः—यथा **स्थाघ्वोरि**त्यत्राऽतपरत्वे स्थाघ्वोर्दीर्घस्य स्थाने **घुमास्थे**त्येव दीर्घेकारे सिद्धे पुनर्वचनमदीर्घार्थमित्यविशेषाद्ध्रस्वप्लुतयोः प्रसङ्गे तदुक्तं '**प्लुतश्च विषये**' इति । एवं च **दूराद्धूता**दिविषयेऽप्यनेनैव प्लुत पक्षेऽनुवाददोषस्तत्र । इह तु प्लुत एव प्राप्नोतीति खट्वा इन्द्र इत्यादिविषयकशास्त्रवैयर्थ्यमेवेत्यनुवाददोषः सोढव्य एवेति वैषम्यमिति । वस्तुतोऽस्य टित्वाभावादेतद्विषये प्लुताऽप्रवृत्तेश्चिन्त्यमेवेदमिति । **स्थाघ्वोरि**तिसूत्रे निरूपयिष्यामः ।

भाष्ये **यः स इति** प्रसिद्ध्यर्थकम् ।

१—पार्षदकृतिरितिपाठान्तरम् ।

* ६ । १ । १०१ । † ६ । १ । १०७ । ‡ ६ । १ । १०८

शास्ति × । 'पचन्ती'ति, 'अतोगुणे पररः' इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यद्रूपग्रहणं करोति+ तस्यैतत्प्रयोजनम्—'यथाजातीयकं परस्य रूपं तथाजातीयकमुभयोर्यथा स्या'दिति ।

इह तर्हि खट्वर्श्यो मालर्श्य इति दीर्घवचनादकारो न, अनान्तर्यादेकारौकारौ न । तत्र को दोषः ? विगृहीतस्य श्रवणं प्रसज्येत । न ब्रूमो 'यत्र क्रियमाणे दोषस्तत्र कर्तव्य'मिति । किं तर्हि ? यत्र क्रियमाणे न दोषस्तत्र कर्तव्यमिति । क्व च क्रियमाणे न दोषः ? संज्ञाविधौ । 'वृद्धिरादैज्दीर्घः' 'अदेङ्गुणो दीर्घ' इति । तर्हि दीर्घग्रहणं कर्तव्यम् ? न कर्तव्यम् । कस्मादेवान्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ? तपरे गुणवृद्धी ।

ननु च तः परो यस्मात्सोऽयं तपरः । 'ने'त्याह, तादपि परस्तपर इति । यदि तादपि परस्तपरः 'ऋदोरप्' [ ३ । ३ । ५७ ] इतीहैव स्यात्—यवः स्तवः । लवः पव इत्यत्र न स्यात् ।

प्र०—त्यर्थम् । तस्मात् पूर्वश्रुति. पूर्वरूपार्था । सैवानत्रानुवर्तते इति 'सिद्ध'मिति पूर्वरूप भविष्यति ।

अथवेति । 'विधिनियमसम्भवे विधिरेव ज्यायान्'इति विधेर्बलीयस्त्वान्नियमो न भवति—'हल एव दीर्घत्वं यथा स्यात्, उत इत्यादौ मा भू'दिति ।

तपर इति । तपरसंज्ञिसहचरिते गुणवृद्धिसंज्ञे इत्यर्थः ।

तादपीति । तन्त्रन्यायाश्रयणादेकस्यैव द्विशक्तित्वादेकशेषाश्रयणाद्वाऽनेकार्थाभिधानमिति भाव ।

उ०—वा छन्दसीत्यत्रेति । 'वा छन्दसी'त्यस्यात्रानुवृत्त्यर्थमित्यर्थः । पूर्वरूपार्थेति । पूर्वव्यक्तयात्मकपूर्वरूपार्थेत्यर्थः । भाष्ये—पर इतीयतेति । ह्रस्वत्वादिरूपमिति भावः । सिद्धान्ते तु रूपग्रहणं स्पष्टार्थमेव, अस्य भाष्यस्य पूर्वपक्ष्युक्तित्वात् ।

अकारो नेति । रपरत्वेऽपि द्विमात्रत्वरूपदीर्घत्वाऽसम्भव एव । विगृहीतस्येति । दीर्घश्रुतिपरिभाषयोर्विरोधेन जातिपक्षे व्यक्तिपक्षे वा तद्विषयकलक्षणानुप्लवादिति भावः ।

ननु गुणवृद्धिसंज्ञयोस्तपरत्वाऽभावात्पूर्वोक्तदोषाऽपरिहृतेश्च भाष्यमयुक्तमित्याशङ्क्याह—तपरसंज्ञीति । तपरशब्दनिर्दिष्टे संज्ञिनि गुणवृद्धिसंज्ञे प्रवर्तेते इत्यर्थः । एवं च त्रिमात्रादीनां तत्र संज्ञितयाऽनिर्देशान्नोक्तदोष इति भावः ।

भाष्ये—ननु चेति । एवं चैङैचौ न तपराविति भावः ।

नेत्याहेति । स एव तपर इति नेत्याहेत्यर्थः । अर्थभेदेन शब्दभेदे—तन्त्रन्यायेति । तद्भेदेऽपि शब्दैक्यपक्षे आह—एकस्यैव द्विशक्तित्वादिति । एकशेषेति । समाहारद्वन्द्वविषये एकशेषाऽभावेनैकवचनानुपपत्त्येदं चिन्त्यम् ।

× ६ । ४ । २ । + ६ । १ । ९७, ९४

**नैष तकारः । कस्तर्हि ? दकारः । किं दकारे प्रयोजनम् ? अथ किं तकारे ? यद्यसन्देहार्थस्तकारः, दकारोऽपि । अथ मुखसुखार्थस्तकारः, दकारोऽपीति ।**

**इदं विचार्यते—'य एते वर्णेषु वर्णैकदेशा वर्णान्तरसमानाकृतय एतेषामवयवग्रहणेन ग्रहणं स्याद्वा न वे'ति ? कुतः पुनरियं विचारणा ? इह समुदाया**

**प्र०**—बहुव्रीहिवादी चोदयति—**किं दकार इति** ।

समासद्वयवादी त प्रत्याह—**अथ किं तकार इति** । तव केवलबहुव्रीहिवादिनो निष्प्रयोजनं तपरत्वम्, ॠकारस्याऽनण्त्वाद्दीर्घॠकारादीनां ग्रहणाऽप्रसङ्गाद्गुणानां चाऽभेदकत्वात्तत्प्राप्त्यर्थत्वाभावात् । अथ तवाऽसन्देहार्थो मुखसुखार्थो वा तकार एवं मम दकार इत्यर्थः । 'नित्स्वरित'मित्यत्रत्यभाष्येणाऽस्य विरोधः । तत्र हि—'तिति प्रत्ययग्रहणं चोदितम्, इह मा भूत्—दिव उत् । द्युभ्यामिति । ततो दित्त्वाश्रयणेन प्रत्याख्यानम्, तपरसूत्रे च दकारश्चर्त्वभूतो निर्दिश्यते । तेन तत्कालस्य ग्राहको दकारः'—इत्युक्तम् । इह च दकाराभ्युपगमेन लवादिषु दोषः परिहृतः । अत्राह—थकारस्थानिको धकारस्थानिको वा दकारोऽत्र विवक्षित—'**कस्तर्हि दकार' इति** ।

**वर्णान्तरसमानाकृतय इति** । आकारादिरवकारादिसदृशा अवयवा, ॠकारलृकारयो रेफलकारसदृशावयवौ, सन्ध्यक्षरेष्वकारेकारोकारसदृशाः, तत्र केवलवर्णानामिवावयवेषु भवति नवेति विचारः । **इह हि समुदाया अपीति** । ऋलृएओऐऔ इति । **अवयवा अपीति** । **अइउण्** ऋऌकिति । तत्र समुदायपरे निर्देशे—सन्निहिता अप्यवयवा नान्तरीयकत्वादेजादिसंज्ञा न लभन्ते, अवयवपरे च निर्देशे समुदायो न संज्ञाभाक्, यथा **दध्यत्रे**त्यादावनच्कस्य हलो दुःखेनोच्चार्यत्वात्निर्दिष्टोऽप्यकारोऽन्यत्र प्राधान्येन निर्देशाद्धलादिसंज्ञां न प्रतिपद्यते इति दध्यत्रेत्यादावनच्क एव यणादेशः प्रवर्तते । तत्राऽसत्यामप्येजादिसंज्ञायामयादयः समुदायादेशा अपि नान्तरीयकत्वादवयवान्निवर्तयन्ति । एवं स्थिते अग्न इन्द्र इत्यादौ यत्रावयवकार्यं प्राप्नोति समुदायकार्यं च, तत्रान्तरङ्गत्वात्तत्र च साक्षाच्चोदितत्वात्प्रत्यक्षत्वात्तारत्वाच्चावयवकार्यप्रसङ्गः । अवयवावगतिर्व-

---

उ०—'**सुखमुखार्थं**' इति पाठे मयूरव्यंसकादित्वात्समासः । ननु **एङ्ऐजिति** संज्ञायास्तात्परत्वेऽपि संज्ञिनामेकारादीनां किमागतमिति चेत्, न, तपरशब्दबोध्योऽपि वर्णस्तत्कालस्यैव संज्ञेत्यर्थान्न दोषः । **गुणानां चेति** । अण्सु गुणानां तत्त्वाभावेऽपि अनण्त्वादेव दीर्घादिविषये तत्त्वमिति भावः । ननु दित्त्वे 'दिव उ'दित्यत्र तत्कालग्रहणं न स्यादत आह—**तपरसूत्रे चेति** । **इहेति** । तपरसूत्रे दकारानाश्रयणेन चेत्यपि बोध्यम् । **थकारस्थानिक इति** । तस्य चैतद्व्यथाऽसिद्धत्वान्न तत्र तपरसूत्रप्रवृत्तिरिति भावः ।

**अवयवग्रहणेन**—अवयवसदृशवर्णग्रहणेन ग्रहणं स्यान्नवेति भाष्यार्थः । तत्फलितमाह—**तत्र केवलेति** । नन्वकारेण एकावयवग्रहणमन्तरेणैवेदकारादीनामेजादिसंज्ञा प्राप्नोतीति विचारोऽपि कुतो नेत्यत आह—**तत्र समुदायेति** । अतएव 'प्राटती'त्यादौ न पररूपम् । तत्र दृष्टान्तमाह—**अवयवपरे चेति** । यथाऽवयवपरे निर्देशे समुदायो न संज्ञाभाग्, एवं समुदायपरे निर्देशेऽवयवा न तद्भाज इत्यर्थः । तदुपपादयति—**यथेति** । **अन्यत्रेति** । सर्वस्यावयवस्यान्यत्र पृथङ्निर्देशे समुदायनिर्देशः स्वपर एव, सर्वस्यावयव-

अप्युपदिश्यन्ते, अवयवा अपि । अभ्यन्तरश्च समुदायेऽवयवः । तद्यथा वृक्षः प्रचलन् सहावयवैः प्रचलति । तत्र समुदायस्थस्यावयवस्यावयवग्रहणेन ग्रहणं स्याद्वा न वेति जायते विचारणा । कश्चात्र विशेषः ?

**वर्णैकदेशा वर्णग्रहणेन चेत्सन्ध्यक्षरे समानाक्षरविधिप्रतिषेधः ॥ ६ ॥**

**वर्णैकदेशा वर्णग्रहणेन चेत्सन्ध्यक्षरे समानाक्षराश्रयो विधिः प्राप्नोति स प्रतिषेध्यः । अग्ने इन्द्र, वायो उदकम् । 'अकः सवर्णे दीर्घः' [ ६ । १ । १०१ ] इति दीर्घत्वं प्राप्नोति ।**

**प्र०**—कृत्वाद्धि समुदायावगमस्य समुदायकार्यं बहिरङ्गम् । अयादीनां चावकाशः—'अग्न आयाहीति । नन्वत्रापि यणादेशोऽवयवस्य प्राप्नोति । येन नाप्राप्ते इति वा मध्येऽपवादा इति वा यण एवायादयो बाधकाः स्युः । तत्र यथा दधीन्द्र इत्यत्र,—दधिशब्दस्थ इकारः सवर्णदीर्घत्वं प्रतिपद्यते, एवमेकारस्थोऽपि प्रतिपद्येत । प्रत्याहारे **एओङ्ऐऔ**जित्यत्रावयवानां प्राधान्येनाऽनिर्देशादित्येव ग्रहणाशङ्काबीजमुपन्यस्तम् । इदानीमग्रहणपक्षाशङ्काबीजमुपन्यस्यते-**अभ्यन्तरश्चेति**। तिरोहितत्वादवयवानां, समुदायकार्ये पारतन्त्र्यात्, स्वकार्यस्याऽप्रयोजकत्वान्नरसिंहवज्जात्यन्तरयोगाद्वर्णान्तरस्याऽभ्यमाणत्वे तत्कार्याऽप्रवर्तनादित्यर्थः ।

**समानाक्षरेति** । समानशब्देन पूर्वाचार्यनिर्देशादकोऽभिधीयन्ते, '**दश समाना**' इति वचनात् । तेन समानकार्यं प्राप्नोतीत्यर्थः ।

उ०—स्यान्यत्राऽनिर्देशे तु समुदायनिर्देशोऽनिर्दिष्टावयवपर इति विवेकः । नन्वेजादिसंज्ञानामवयवाऽवृत्तित्वे कथमचो निवर्तकेनाऽयादिना तदवयवस्य निवृत्तिरत आह—**तत्राऽसत्यामपीति** । तन्निवृत्तिं विना समुदायनिवृत्तेः कर्तुमशक्यत्वादिति भावः । **अवयवकार्यं**—दीर्घः । **समुदायकार्यम्**—अय् । **तत्र च साक्षादिति** । दीर्घे । अयादिकार्ये हि समुदायव्यपदेशेनावयवो नोदितो न साक्षादिति भावः । साक्षाच्चोदितत्वं प्रत्यक्षत्वे हेतुः । नन्वयादिरनवकाशोऽत आह—**अयादीनामिति** । **नन्विति** । ततश्च विध्यन्तरपूर्वकोऽयादिः सर्वस्य बाधकः स्यादिति भावः । परिहरति—**येनेति** । **प्राधान्येनानिर्देशादिति** । अस्य'एजादिसंज्ञाऽभावेऽपि स्वतन्त्राकारेण ग्रहणं स्या'दिति शेषः । भाष्ये-**अभ्यन्तरश्चेति** । तदुच्चारणं विना समुदायोच्चारणस्याऽशक्यत्वादित्यर्थः । तदाह—**तद्यथा वृक्ष इति** । तदुपपादयति—**तिरोहितत्वादित्यादिना** । **समुदायकार्ये पारतन्त्र्यादिति** । समुदायसम्पादनरूपे कार्ये पारतन्त्र्यादित्यर्थः । **स्वकार्यस्याप्रयोजकत्वादिति** । स्वकार्यनिरूपितप्रयोजकत्वाऽभावादित्यर्थः । तत्प्रयोजकत्वाभावे हेतुः—**नरसिंहवदिति** । तदवयवे नरत्वाद्यभाववदेतदवयवेऽच्त्वाद्यभाव इति भावः ।

**वचनादिति** । 'अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ दश समाना' इति पूर्वव्याकरणवचनादित्यर्थः । **समानकार्यम्** । अग्रपसमानाऽक्षरकार्यमित्यर्थः । **सवर्णकार्यमिति** पाठे–सवर्णदीर्घरूपकार्यमित्यर्थः ।

दीर्घे ह्रस्वविधिप्रतिषेधः ॥ ७ ॥

दीर्घे ह्रस्वाश्रयो विधिः प्राप्नोति, स प्रतिषेध्यः । ग्रामणीः, आलूय, प्रलूय । 'ह्रस्वस्य पिति कृति तु'गिति तुक् प्राप्नोति* । नैष दोषः, आचार्यप्रवृत्तिर्ज्ञापयति— 'न दीर्घे ह्रस्वाश्रयो विधिर्भवती'ति यदयं दीर्घाच्छे तुकं शास्ति† ।

नैतदस्ति ज्ञापकम्, अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् ? 'पदान्ताद्वा' [ ६ । १ । ७६ ] इति विभाषां वक्ष्यामीति । यत्तर्हि योगविभागं करोति । इतरथा हि 'दीर्घात्पदान्ताद्वे'त्येव ब्रूयात् ।

इह तर्हि—खट्वाभिः, मालाभिः, 'अतो भिस ऐस्' [ ७ । १ । ९ ] इत्यैस्भावः प्राप्नोति । तपरकरणसामर्थ्यान्न भविष्यति ।

इह तर्हि—याता, वाता । 'अतो लोप आर्धधातुके' [ ६ । ४ । ४८ ] इत्यकारलोपः प्राप्नोति । ननु चाऽत्रापि तपरकरणसामर्थ्यादेव न भविष्यति । अस्ति ह्यन्यत्तपरकरणे प्रयोजनम् । किम् ? सर्वस्य लोपो मा भूदिति । अथ क्रियमाणेऽपि तपरे परस्य लोपे कृते पूर्वस्य कस्मान्न भवति ? परलोपस्य स्थानिवद्भावादसिद्धत्वाच्च ।

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'नाकारस्थस्याऽकारस्य लोपो भवति' इति, यदयम् 'आतोऽनुपसर्गे कः' [ ३ । २ । ३ ] इति ककारमनुबन्धं करोति । कथं कृत्वा ज्ञापकम् ? कित्करणे एतत्प्रयोजनम्—'कितीत्याकारलोपो यथा स्या'दिति × । यदि चाकारस्थस्याऽकारस्य लोपः स्यात्, कित्करणमनर्थकं स्यात्; परस्याऽकारस्य लोपे कृते द्वयोरकारयोः पररूपे हि सिद्धं रूपं स्यात्—गोदः कम्बलद इति । पश्यति त्वाचार्यो नाऽऽकारस्थस्याऽकारस्यलोपो भवतीति, अतः ककारमनुबन्धं करोति । नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत्स्यात् 'तुन्दशोकयोः परिमृजाऽपनुदोः'

प्र०—असिद्धत्वाच्चेति । 'असिद्धवदत्राभा'दित्यनेन ।

यत्तर्हीति । नन्वसति विच्छेदे आकारस्थस्याऽकारस्य लोपे कृते द्वयोरकारयोः पररूपस्य धातुप्रत्ययान्तवद्भावाच्छन्दोगायेत्यत्रातो धातोरित्याकारलोपप्रसङ्गः । नैष दोषः । सन्निपात-

उ०—दीर्घाच्छे इति । 'दीर्घस्य च्छे तु'गिति हि तदर्थः । ननु ह्रस्वस्येत्यत्राऽच इत्येव सिद्धे ह्रस्वग्रहणसामर्थ्यादेव तुङ्नेति चेन्न; पदलाघवाऽभावादित्याशयात् ।

अस्ति हीति । तत्र दीर्घादित्यस्याऽभावे 'कुड्यच्छाये'त्यादावपि विकल्पः स्यादिति भावः ।

असिद्धवदिति । चिणो लुङ्—न्यायेनेति भावः ।

* ६ । १ । ७१ । † ६ । १ । ७५ । × ६ । ४ । ६४ ।

[ ३ । २ । ५ ] इति । यत्तर्हि 'गापोष्टक्' [ ३ । २ । ८ ] इत्यनन्यार्थं ककार-मनुबन्धं करोति ।

## एकवर्णवच्च ॥ ८ ॥

'एकवर्णवच्च दीर्घो भवती'ति वक्तव्यम् । किं प्रयोजनम् ? वाचा तरतीति द्व्यज्लक्षणष्ठन्मा भूदिति* । इह च वाचो निमित्तम्, 'तस्य निमित्तं संयोगोत्पातौ' [ ५ । १ । ३८ ] इत्यनुवर्तमाने 'गोद्व्यचः' [ ५ । १ । ३९ ] इति द्व्यज्लक्षणो यन्मा भूदिति । अत्रापि गोनौग्रहणं† ज्ञापकम्—'दीर्घाद् द्व्यज्लक्षणो विधिर्न भवति' इति । अयं तु सर्वेषामेव परिहारः—

प्र० —परिभाषया लोपो न भविष्यति । अकार आश्रित्य यशब्द कृतो लोपस्या निमित्तम् । दीर्घत्वं तु 'कश्रा'रे'ति निपातनाद्भवति ।

**एकवर्णवदिति** । अवयवशब्दस्वर्याश्रयणेन वाक्यावरस्य द्व्यच्त्वान्निमित्त कार्यं प्राप्नोतीत्येकवर्णवदित्यतिदेश क्रियते ।

**गोनौग्रहणं ज्ञापकमिति** । सामान्येन ज्ञापकं—वर्णावयवाश्रयकार्याभावस्येति अग्न एहीत्यादावेकः पदान्तादती'त्यस्यापि न भवति ।

उ० —भाष्य —**उत्तरार्थमेवदिति** । **इह किञ्चित्त्रपो इतीति** न्यायस्तु नाश्रितः । अत्र केवलाऽकारोच्चारणे उत्तरत्र ककाराकारयोरुच्चारणे गौरवादिति भाव. ।

**सन्निपातेति** । न च दीर्घेणैव स निवर्तित; दीर्घेऽप्यत्वजातिसम्बन्धसत्त्वेन न तथा सन्निपातहति । लोपे तु तस्यापि निवृत्तेस्तद्विरोधस्य स्पष्टत्वादिति भावः । **परे तु** जातिपक्षे **तपरसूत्रं** व्याप्यजातिनिर्देशस्यैव बोधकमिति यत्वनिमित्तसन्निपातस्य दीर्घेण निवृत्तिर्जातैव न कस्याप्यनुवृत्तिस्तस्माद्व्यत्वाव्याप्यत्वजातियत्वादिसन्निपातनिमित्तो दीर्घो न स्वसन्निपातविघातकलोपनिमित्तम् । **सन्निपातपरिभाषायाश्च**-स्वप्रवृत्तेः प्राक् निमित्तभूतो यादृशः संनिपातः, स्वातिरिक्ततद्विघातकस्य स्वयमनिमित्तमित्यर्थः । मात्राकालिकत्वसमानाधिकरणव्यापकजातिनिर्देशपक्षेऽप्यङ्गसञ्ज्ञा तस्य निमित्तं स्यादिति **कृन्मेजन्तसूत्रवदय**-माणभाष्यरीत्या यादृशनिमित्तसंनिपातस्य न लेशतोऽपि सत्तेति वदन्ति । 'प्रातर्ऋतं' 'तद्लृकार' इत्यादौ **'रो रि' तोर्ली**'ति तु नापादितं, तस्याऽभितोऽभागसत्त्वेन तन व्यवधानात्तदप्राप्तेः ।

'अग्ने इन्द्रे'त्यादौ सवर्णदीर्घव्यावृत्तये आह—**सामान्येनेति** । 'गोद्व्यचोऽसङ्ख्ये'ति **गोग्रहणं**, 'नौद्व्यचष्ठ'न्निति नौग्रहणम् । **वर्णावयवाश्रयकार्याभावस्येति** । वर्णावयवेषु भेदेनाऽप्रतिभासमानेषु वर्णाश्रयकार्याभावस्येत्यर्थः । तेन 'मातृणा'मित्यादौ णत्वादिसिद्धिः, भेदेन प्रतिभासात् ।

६

* ४ । ४ । ७ । † ५ । १ । ३९ ; ४ । ४ । ७ ।

**नाऽव्यपवृक्तस्यावयवे तद्विधिर्यथा द्रव्येषु ॥ ६ ॥**

**नाऽव्यपवृक्तस्यावयवस्यावयवाश्रयो विधिर्भवति, 'यथा द्रव्येषु'? तद्यथा द्रव्येषु,—'सप्तदश सामिधेन्यो भवन्ति' इति न सप्तदशाऽरत्निमात्रं काष्ठमग्नावभ्याधीयते। विषम उपन्यासः, प्रत्यृचं चैव हि तत्कर्म चोद्यते, असंभवश्चाऽग्नौवेद्यां च।**

**यथा तर्हि 'सप्तदश प्रादेशमात्रीराश्वत्थीः समिधोऽभ्यादधीते'ति न सप्तदशप्रादेशमात्रं काष्ठमग्नावभ्याधीयते। अत्रापि प्रतिप्रणवं चैतत्कर्म चोद्यते, तुल्यश्चासंभवोऽग्नौ वेद्यां च।**

प्र०—**नाव्यपवृक्तस्येति**। व्यपवर्गो व्यपवृक्तं, भेद। तेनाऽ**व्यपवृक्तस्या**ऽभिन्नबुद्धिविषयस्यैकत्वालम्बनज्ञानग्राह्यस्य **समुदायस्य** योऽवयवस्तस्मिस्**तद्विधि**—पृथग्भूतवर्णविधिर्न भवतीत्यर्थः। अव्यपवृक्तस्याऽवयवस्येति व्यधिकरणे षष्ठ्यौ। अव्यपवृक्तस्य समुदायस्य योऽवयवस्तस्येत्यर्थं। न हि समवमात्रेण कार्याणि क्रियन्ते, अपि तु यत्र तद्बुद्धिरस्ति तत्रैवेत्यर्थ। '**माषा न भोक्तव्या**' इति निषेधस्तु मिश्रेष्वपि प्रवर्तते, तत्र तद्बुद्धिस्तद्रसास्वादनसंभवात्। **सप्तदशेति**। सामिधेनीशब्द ऋचा वाचकः साहचर्यात्काष्ठेषु वर्तते। तत्र सप्तदशहस्ते काष्ठे 'सप्तदश काष्ठानी'ति बुद्धेरभावान्न तस्याऽभ्याधानम्।

**असंभव इति**। अर्द्धचतुर्हस्ता हि वेदिः।

**यथा तर्हीति**। अल्पप्रमाणत्वात्स्यात्संभव इति भावः।

---

उ०—सामान्यापेक्षज्ञापकं विनापि न्यायं न निर्वाहमाह—भाष्ये—**अयन्निवति**। 'अभिन्नबुद्धिविषयस्ये'त्यस्य व्याख्या—**एकत्वालम्बनज्ञानग्राह्यस्येति**। **समुदायस्य योऽवयव इति**। वर्णसमुदायस्येत्यर्थः। **व्यधिकरणे इति**। सामानाधिकरण्येनान्वयेऽ**व्यपवृक्तस्येति** व्यर्थ, सर्वस्याप्यवयवस्यावयविनाऽव्यपवृक्तत्वादिति भावः।

भाष्ये—**अवयवाश्रयः**—अवयवसदृशस्वतन्त्रवर्णाश्रयः। उक्तेऽर्थे युक्तिमाह—**नहीति**। ननु सामिधेनीशब्दस्य ऋक्षु शक्तत्वेन **काष्ठमग्नावाधीयत** इति भाष्यमयुक्तमत आह—**साहचर्यादिति**। तदाधेयत्वेनेति भाव। **तत्र सप्तदशेति**। यद्यपि एकैका समिदरत्निमात्रमिति मिलितानां सप्तदशानां समिधां सप्तदशारत्निमात्रत्वं भवति, एकस्यापि तावत्त्वमस्ति, तथाऽप्यव्यपवृक्तसमुदायावयवत्वान्न व्यपवृक्ताश्रयकार्यप्रसङ्ग इति भावः।

न ह्यव्यपवृक्तत्वमात्रनिबन्धनं तदनभ्याधानं किं तु असंभवनिबन्धनमित्याह—भाष्ये—**विषम इति**। आहितपुनर्ग्रहणस्य निषिद्धत्वादेकस्य काष्ठस्य प्रत्यृचमाधानं न संभवतीति भावः। युक्त्यन्तरमाह—**असंभवश्चेति**। तमुपपादयति—**अर्द्धचतुर्हस्तेति**। अर्द्धेन चतुर्हस्तेति तृतीयातत्पुरुषः। समिधोऽग्निवेदिबहिर्भावनिषेधाच्चाऽसंभव इति भाव।

**यथा तर्हि 'तैलं न विक्रेतव्यम्' 'मांसं न विक्रेतव्य'मिति, व्यपवृक्तं च न विक्रीयते, अव्यपवृक्तं च गावः सर्षपाश्च विक्रीयन्ते। तथा 'लोमनखं स्पृष्ट्वा शौचं कर्तव्य'मिति, व्यपवृक्तं स्पृष्ट्वा नियोगतः कर्तव्यम्, अव्यपवृक्ते कामचारः। यत्र तर्हि व्यपवर्गोऽस्ति। क्व च व्यपवर्गोऽस्ति? सन्ध्यक्षरेषु।**

**सन्ध्यक्षरेषु विवृतत्वात्॥ १०॥**

**यदत्राऽवर्णं, विवृततरं तदन्यस्मादवर्णात् ये अपीवर्णोवर्णे, विवृततरे ते अन्याभ्यामिवर्णोवर्णाभ्याम्।**

**अथवा पुनर्न गृह्यन्ते।**

प्र०—**अव्यपवृक्तमिति**। व्यपवर्गस्याऽभावेनेत्यर्थः।

**यत्र तर्हीति**। 'ऐ' 'औ' इत्यत्र हि स्फुटोऽकारप्रतिभासोऽस्ति।

**विवृतत्वादिति**। अकारस्य विवृतोपदेशादत्र प्रकर्षो विवक्षितः। तदाह—**विवृततरमिति**। तत्र प्रयत्नभेदादसावर्ण्यादकारेण सन्ध्यक्षरावयवस्य ग्रहणं नास्तीत्यर्थः। तदेवमाकारादि**स्थस्या**ऽवयवस्य भेदेनाऽग्रहणादग्रहणम्। सन्ध्यक्षर**स्थस्य** त्वसावर्ण्यात्। ऋकारस्थस्तु रेफो भेदेन प्रतिभासाद्गृह्यते इति **नुडा**दिसिद्धिः।

**अथवेति**। नरसिंहवद्वर्णान्तरत्वात्सादृश्याच्च प्रत्यभिज्ञानात्त्वाऽसिद्धस्य पृथगुपलब्धानां वर्णानां समुदाये नास्ति सत्त्वम्। समुदायवाचोयुक्तिरपि तत्र वर्णान्तरं न तात्त्विकी, भ्रान्तिवशात्त्ववयवसद्भावाश्रयेण प्रवृत्ता।

उ०—**अव्यपवृक्तमिति**। अर्थाभावेऽव्ययीभावः। तदाह— **व्यपवर्गस्येति**। वस्तुतस्तत्पुरुष एवाय, व्यपवृक्तभिन्नतैलमांसरूपा गावः सर्षपाश्चेत्यर्थः। नञाऽव्ययीभावस्याऽभावादित्यग्रे वक्ष्यते। भाष्ये **कामचार इति**। स्पर्शे कामचारेण शौचाऽभाव इत्यर्थः।

एङोः सश्लिष्टावर्णत्वेन व्यपवर्गस्यास्पष्टत्वात्सन्ध्यक्षरग्रहणमैचोऽभिप्रायमित्याह— **ऐऔ इति**।

**अकारस्येति**। यद्यप्यैचो विवृततमास्तथापि विवृततरत्वमस्त्येवेति भावः। प्रयत्नभेदादेव एङैचोः परस्परं सावर्ण्याऽभावः, एङो विवृततरत्वादैचो विवृततमत्वादिति बोध्यम्।

**नुडादीति**। 'आनृधे' इत्यत्र नुट्। आदिना 'चक्लृपे' इत्यत्र लत्वम्, 'मातृणा'मित्यादौ णत्वं चेति बोध्यम्।

**सादृश्याच्चेति**। चस्त्वर्थे। **समुदाये**—सन्ध्यक्षरादौ। सत्यपि गोसादृश्ये गवये गोत्वस्येव सन्ध्यक्षराद्यवयवेषु अत्वादिजातेरभावादकारादिग्रहणेन ग्रहणं नेति भावः। ऐकारादीनामेकेच्छाप्रयत्नजन्यत्वे-नैकत्वमेव अकारादिवत्। अत एवैषां पदवन्न वर्णसमूहत्वेन प्रतिभास इति। तदेवाह—**समुदायवाच इति**। **भ्रान्तिवशादिति**। भ्रान्तिगृहीतावयवसद्भावाश्रयेणेत्यर्थः। एवं च भ्रान्तिरेव ग्रहणपक्षे बीजमिति भावः। अत एव गोनौग्रहणं चरितार्थम्।

## अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणम् ॥ ११ ॥

अग्रहणं चेन्नुड्विधिलादेशविनामेष्वृकारस्य ग्रहणं कर्तव्यम् । 'तस्मान्नुड् द्विहलः' [ ७ । ४ । ७१ ] 'ऋकारे चे'ति वक्तव्यम् । इहापि यथा स्यात्—आनृधतुः आनृधुरिति । यस्य पुनर्गृह्यन्ते 'द्विहलः' इत्येव तस्य सिद्धम् । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । द्विहल्ग्रहणं न करिष्यते तस्मान्नुड्भवतीत्येव । यदि न क्रियते, आटतुः, आटुरित्यत्रापि प्राप्नोति । अश्नोतिग्रहणं† नियमार्थं भविष्यति—'अश्नोतेरेवाऽवर्णोपधस्य नान्यस्याऽवर्णोपधस्ये'ति ।

लादेशे च ऋकारग्रहणं कर्तव्यम् । 'कृपो रो लः' [ ८ । २ । १८ ] 'ऋकारस्य चे'ति वक्तव्यम् । इहापि यथा स्यात्—कॢप्तः कॢप्तवानिति । यस्य पुनर्गृह्यन्ते, 'र' इत्येव तस्य सिद्धम् । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । ऋकारोऽप्यत्र निर्दिश्यते । कथम् ? अविभक्तिको निर्देशः—कृप उः रः लः—"कृपो रो लः" इति । अथवा

प्र०—**अश्नोतेरेवेति** । सामान्येनावर्णोपधो निवर्त्यते न त्वश्नोतिरेव, सामान्यापेक्षत्वान्नियमज्ञापकस्य ।

**अविभक्तिक इति** । तत्र ऋकारनिर्देशसामर्थ्याद्विभागं प्रकल्प्याऽऽदेशो विधीयते ।

**स्फोटमात्रमिति** । जातिस्फोट इत्यर्थः । ततश्चान्तर्भूतानन्तर्भूतरेफलकारव्यक्तीनां

उ०—वार्तिके **विनामो**—णत्वम् ।

ननु विकरणविशेषनिर्देशेन श्नाविकरणनिवृत्त्यर्थं सूत्रं स्यादत आह—**न त्वश्नोतेरेवेति** । तथा हि सति 'नाऽश्न' इत्येव वदेदिति भावः । **नियमज्ञापकस्य**—नियमबोधकस्य ।

नन्वखण्डवर्णपक्षे ऋकारप्रश्लेषेऽपि कथं सिध्यतीत्यत आह- **तत्र ऋकारेति** । एवं च रेफपदेन तत्सदृश आरोपितरेफत्ववानपि गृह्यत इति फलितम् । मात्रशब्दः सामान्याभिप्राय इत्याह—**जातीति** । जातिश्चावयवाऽनवयवसाधारणीत्याशयेनाह—**ततश्चेति** । एवंविधा च रत्वलत्वजातिरेवेत्यतिप्रसङ्गो न । स्थान्यादेशभावश्च जातेर्व्यक्तिद्वारको बोध्यः । वस्तुतः स्फोट एव श्रोत्रग्राह्यः । वायुनिष्ठरत्वादिना च तस्याऽभिव्यक्तिः । एवं च सादृश्यवतोऽभावेन 'कल्पते' इत्यत्राप्यप्रवृत्तावस्य वैयर्थ्यापत्तिः । एवं च रेफावभासिनः स्फोटस्य प्रसङ्गे लकारावभासः स्फोट इत्यर्थः । एवं च कृपावपि तत्प्रवृत्तिः सम्भवत्येव, तत्रापि रेफावभाससत्त्वात् । आकारादौ तु नैवं ह्रस्वाद्यवभास इति न तत्राकारावभासप्रयुक्तकार्यापत्तिः । तदुक्तम्—**रश्रुतेरित्यादि** । यत्तु स्वतन्त्राऽस्वतन्त्रसाधारणजातिपरतयैतद्भाष्यव्याख्यानम् । तन्न । तादृशजातौ मानाभावात् । नरसिंहदृष्टान्तानुपपत्तेश्च । 'सादृश्यात्तु प्रत्यभिज्ञे'त्यादिस्वोक्तिविरोधापत्तेश्च । किं चैवं सति रजातेरित्येव भाष्यकारो वदेत् । किं च तादृशजातिसत्त्वे वर्णैकदेशानामपि तज्जातिमत्त्वेन वर्णग्रहणेन ग्रहणपक्षस्यैव सिद्धया ग्रहणपक्षमुक्त्वाऽथ वा न गृह्यन्त इति पक्षेतत्समाधानपरभाष्याऽसङ्गतेः । अत एवाग्रे

† ७ । ४ । ७२ ।

उभयतः स्फोटमात्रं निर्दिश्यते—'रश्रुतेर्लश्रुतिर्भवती'ति ।

विनामे ऋकारग्रहणं कर्तव्यम् । 'रषाभ्यां नो णः समानपदे [ ८ । ४ । १ ] ऋकाराच्चे'ति वक्तव्यम् । इहापि यथा स्यात्—मातॄणां पितॄणामिति । यस्य पुनर्गृह्यन्ते 'रषाभ्या'मित्येव तस्य सिद्धम् । न सिध्यति । यत्तद्रेफात्परं भक्तेस्तेन व्यवहितत्वान्न प्राप्नोति । मा भूदेवम् । अड्व्यवाये* इत्येव सिद्धम् । न सिध्यति । वर्णैकदेशाः के वर्णग्रहणेन गृह्यन्ते, ये व्यपवृक्ता अपि वर्णा भवन्ति । यच्चापि रेफात्परं भक्तेर्न तत्क्वचिदपि व्यपवृक्तं दृश्यते ।

एवं तर्हि योगविभागः करिष्यते, 'रषाभ्यां नो णः समानपदे' । ततः—'व्यवाये'। व्यवाये च रषाभ्यां नो णो भवतीति । ततः—'अट्कुप्वाङ्नुम्भिः' इति । इदमिदानीं किमर्थम् ? नियमार्थम् । 'एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यै'रिति ।

यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'भवत्यृकारान्नो णत्व'मिति यदयं क्षुभ्नादिषु नृनमनशब्दं पठति† ।

प्र०—सामान्य स्थान्यादेशभावेनाश्रीयते ।

यत्तदिति । रेफाद्भक्तेरिति समानाधिकरणे पञ्चम्यौ ।

अड्व्यवाय इति । ऋकारेण यथा दीर्घो गृह्यते. एवमृकारभागोऽपीत्यर्थः ।

न सिद्ध्यतीति । तस्य भागस्य स्फुटप्रतिभासाऽविषयत्वाज्जात्यभिव्यक्तिहेतुत्वाऽभावाच्चेति भाव ।

एतैरेवेति । आकारादयोऽप्यकारादिभि प्रत्याय्यत्वादाक्षरसमाम्नायिकाः । भक्तिस्तु न प्रत्याय्या. न च प्रत्यायिकेति नियमेन न निवर्त्यते ।

उ०—रषाभ्यामिति सूत्रे–'यथा नरसिंहावयवाना नरत्वसिंहत्वजातियोगाभावात्पुरुषमृगराजाभ्यामेकाकृतियोगाऽभावः. एवं वर्णवर्णैकदेशयोरपी'ति कैयट आहेति वदन्ति ।

ऋकारेणेति । ऋकारावयवस्य रेफस्येव तदच्भागस्यापि केनचिदकारादिना ग्रहणादद्त्वमिति मन्यते ।

जात्यभिव्यक्तीति । अत्वादिजातीत्यर्थः । एवं च न केनाप्यचा तद्ग्रहणमिति भावः । अत्र जात्यभिव्यक्तिहेतुत्वाऽभावे-स्फुटप्रतिभासाविषयत्वं हेतुः । चो हेतौ । अतो न सिद्ध्यतीत्यर्थः ।

नन्वाकारादिभिर्व्यवायेऽपि न स्यात्. आक्षरसमाम्नायिकत्वाऽभावादत आह—आकारादयोऽपीति । भक्तिस्त्विति । असवर्णत्वादनुपदेशाच्चेति भावः ।

भाष्ये नृनमनशब्दमिति । सज्ञाभूतमित्यभिप्रायः । 'गन्धर्वगान'मित्यादौ सुबुत्पत्तेः पूर्वं समासेपि णत्ववारणायाऽखण्डपदे इत्यर्थके 'समानपदे' इत्यत्र पदस्यार्थबोधकस्यैव ग्रहणेन, सखण्डत्वेऽसज्ञाया णत्वप्राप्त्यभावादिति बोध्यम् । 'छन्दस्य'दित्यस्य तु नात्र प्राप्तिः, ईदृशे विषयेऽवग्रहाऽभावादित्याहुः ।

*८ । ४ । २ । †८ । ४ । ३६ ।

नैतदस्ति ज्ञापकम् । वृद्ध्यर्थमेतत्स्यात्—नार्नमनिः । यत्तर्हि तृप्नोतिशब्दं पठति । यच्चापि नृनमनशब्दं पठति । ननु चोक्तम्—'वृद्ध्यर्थमेतत्स्यादिति । बहिरङ्गा वृद्धिरन्तरङ्गं णत्वम् । 'असिद्धं बहिरङ्गमन्तरङ्गे' । अथवा उपरिष्टाद्योगविभागः करिष्यते*'ऋतः' नो णो भवति । ततः—'छन्दस्यवग्रहात्' । 'ऋत' इत्येव ।

## प्लुतावैच इदुतौ† ॥ १२ ॥

एतच्च वक्तव्यम् । यस्य पुनर्गृह्यन्ते, 'गुरोष्टे'रित्येव प्लुत्या तस्य सिद्धम्× यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । क्रियत एतन्न्यास एव ।

## तुल्यरूपे संयोगे द्विव्यञ्जनविधिः ॥ १३ ॥

तुल्यरूपे संयोगे द्विव्यञ्जनाश्रयो विधिर्न सिध्यति—कुक्कुटः, पिप्पली, पित्तमिति । यस्य पुनर्गृह्यन्ते तस्य द्वौ ककारौ, द्वौ पकारौ, द्वौ तकारौ । यस्यापि न गृह्यन्ते तस्यापि द्वौ ककारौ, द्वौ पकारौ, द्वौ तकारौ । कथम् ? मात्राकालोऽत्र

प्र०—गुरोष्टेरिति । ऋकारो गुरुरनन्त्य टेरिति सिद्धम् । तन्त्रन्यायाश्रयणाच्च गुरोरपि स्थाने प्लुतो भवति—देवदत्ते३ति ।

क्रियते न्यास एवेति । अवश्यकर्तव्यता दर्शयति । व्यपवृक्तत्वेऽपि भागयोर्विवृततरत्वात् प्रयत्नभेदादिकारोकाराभ्यामग्रहणादच्त्वाऽभावात् ।

तुल्यरूप इति । तुल्यरूपावयवत्वात्संयोगस्तुल्यरूपस्तस्यैकवर्णत्व पूर्वपक्षे, सिद्धान्ते तु

उ०—बहिरङ्गा वृद्धिरिति । त्रिपाद्यामपि बहिरङ्गपरिभाषा प्रवर्त्तत इति वार्तिकम नैतत् । भाष्यमते तु तृप्नोतिशब्दपाठस्यैव ज्ञापकता बोध्या । ऋतो नो ण इति । 'मातॄणा'मित्यादौ दीर्घस्य बहिरङ्गाऽसिद्धत्वाण्णत्वम् । यद्वा प्रशास्तॄणामिति निर्देशाण्णत्वम । अत्र तपरत्वं मुखसुखार्थमेव । उत्तरत्राप्येवमेव, फलाभावात् । ध्वनितं चेदं वृत्तौ ।

ननु गुर्ववयवटेरित्यर्थाङ्गीकारे गुरुरूपटेः प्लुतो न स्यादत आह—तन्त्रेति । स्थानषष्ठ्यन्तावयवषष्ठ्यन्तयोर्गुरुशब्दयोरित्यर्थः । गुर्ववयवटिश्चैच एव संभवति नान्यस्य आकारादेः, तदवयवस्य व्यपवृक्तत्वाऽभावादिति भावः ।

अच्त्वाभावादिति । तन्मूलटित्वाऽभावान्चेत्यपि बोध्यम ।

संयोग इति । संयोगसज्ञार्हे इत्यर्थः । तस्यैकवर्णत्वमिति । एवं च सयोगसज्ञा न स्यादिति भावः । संयोगे इति । भाष्यं तु—संयोगार्ह इत्यर्थपरमिति तात्पर्यम् । शिष्टसमाचारः—शिष्टव्यवहारः ।

भाष्ये—मात्राकालोऽत्रेति, बहुव्रीहिः, संयोगोऽन्यपदार्थः । मात्रिकव्यञ्जनाभावेऽनुपदिष्टत्वं हेतुः । 'कुक्कुट' इत्याद्युच्चारणं तु न उपदेशः । अनुपदिष्टत्वं नाम अक्षरसमाम्नायेऽपठितत्वं, ग्राहकशास्त्रेणाऽगृहीतत्वं च । अनुपदिष्टं सत सत्त्वेन कथ शक्यं विज्ञातुमित्यर्थः । एव चानुपदिष्टस्याऽसत्त्वात्तत्प्रतिपत्तिर-

* ८ । ४ । २६ । † ८ । २ । १०६ । × ८ । २ । ८६ ।

गम्यते । न च मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुमसच्च कथं शक्यं प्रतिपत्तुम्† ।

यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रैतन्नास्ति—'अणसवर्णान्गृह्णाति' इति । इह तु कथम्—सय्ँयन्ता, सव्ँवत्सरः, यल्ँलोकम्, तल्ँलोकमिति यत्रैतदस्त्यणसवर्णान् गृह्णातीति ? अत्रापि मात्राकालो गृह्यते । न च मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुमसच्च कथं शक्यं प्रतिपत्तुम् ॥ ४ ॥

## हयवरट् ॥ ५ ॥

सर्वे वर्णाः सकृदुपदिष्टा अयं हकारो द्विरुपदिश्यते—पूर्वश्चैव परश्च । यदि पुनः पूर्व एवोपदिश्येत, पर एव वा, कश्चात्र विशेषः ?

**हकारस्य परोपदेशेऽड्ग्रहणेषु हग्रहणम् ॥ १ ॥**

हकारस्य परोपदेशेऽड्ग्रहणेषु हग्रहणं कर्तव्यम् । 'आतोऽटि नित्यम्'

प्र०—वर्णद्वयरूपता । आशूच्चारणे तु भ्रान्तमेकत्वज्ञानमिति शिष्टसमाचारः ।

अत्रापीति । सानुनासिकनिरनुनासिकौ द्वावत्र वर्णावित्यर्थः ॥ ४ ॥

हयवरट् । पूर्वश्चेति । पूर्वापरोच्चारणक्रियाभेदादेकस्यैव हकारस्य पूर्वापरव्यपदेशः ।

उ०—शङ्कते ऽह–असच्चेति । क्वचित्तु 'असच्चे'त्यादिग्रन्थो न दृश्यते । अनेन लृकाराऽपाठे तस्याऽसत्त्वशङ्कया तयोः सावर्ण्यविधिरप्यशक्य इति सूचितम् ।

यत्रैतदस्तीति भाष्ये यत्र–हलोऽनन्तरा इत्यत्र । यकारादिभिरस्य ग्रहणे हल्द्वयाभाव इति भावः ।

सानुनासिकेति । अणुदित्सूत्रं हि विद्यमानस्य लोकसिद्धस्य सवर्णस्य ग्राहकमेव, न त्वप्रसिद्धसवर्णकल्पकमिति भावः ॥ ४ ॥

हयवरट् । नन्वयं हकार इत्यनेनैकत्वं हकारस्य सूचितमिति कथं तद्विरुद्धं पूर्वश्चेत्यादिना भेदाश्रयणमत आह—पूर्वपरेति । एतद्भाष्यादेकत्वं वर्णानामित्येव पक्षो भगवतः संमत इति ज्ञायते । भाष्ये—यदि पुनरिति । न चैवं परहकाराऽभावे लकारस्याप्यभावेन तन्त्राद्याश्रयणेन हलन्त्यमित्यत्रान्योन्याश्रयपरिहारो वक्ष्यमाणो विरुध्येतेति वाच्यम्, रन्त्यं हरिति न्यासेन, लन्त्यंहलिति न्यासेन वा तत्परिहारात् । लाघवाऽभावेऽपि एवं कर्तुं शक्यं न वेत्येव विचारतात्पर्यात् । यद्वा हरन्त्यमित्यस्यैवावृत्त्या हबोधकसूत्रसमुदायान्त्यमित्यर्थः । परे तु परहकाराभावेऽपि 'ल' इत्येव सूत्रं कार्यं प्रातिशाख्यादिप्रसिद्धहलादिप्रत्याहारसिद्ध्यर्थम् । तदर्थं रान्तस्यापि शक्तिकल्पने गौरवात् । हलन्त्यमित्यस्यावृत्त्या 'हल्प्रत्याहारबोधकसूत्रसमुदायान्त्यमि'त्यप्यर्थ इत्यदोष इत्याहुः ।

अड्ग्रहणेष्विति । अङ् गृह्यते येषु सूत्रेष्वित्यर्थः । शश्छोटीत्यस्योदाहरणादाने बीजमाह—हकारपरस्येति । न च 'तच्छ्लोकेन' 'वाक्छ्लक्ष्णा' इत्याद्युदाहरणासंभवः, शास्त्रबोधितं सौत्रं च विहाय हलामुच्चारणार्थोऽचं

† 'असच्च कथं शक्यं प्रतिपत्तु'मिति पाठः क्वचिन्न दृश्यते । दृश्यतामिहैवोद्द्योते नागेशभट्टस्य टिप्पणी ।

[ ८ । ३ । ३ ] 'शश्छोऽटि' [ ८ । ४ । ६३ ] 'दीर्घादटि समानपादे' [ ८ । ३ । ९ ] 'हकारे चे'ति वक्तव्यम् । इहापि यथा स्यात्—महाँ हि सः ।

**उत्वे च ॥ २ ॥**

उत्वे च हकारग्रहणं कर्तव्यम् । 'अतो रोरप्लुतादप्लुते' [ ६ । १ । ११३ ] 'हशि च' [ ६ । १ । ११४ ] 'हकारे चे'ति वक्तव्यम् । इहापि यथा स्यात्—पुरुषो हसति, ब्राह्मणो हसतीति ।

अस्तु तर्हि पूर्वोपदेशः ।

**पूर्वोपदेशे किन्त्वक्सेड्विधयो झल्ग्रहणानि च ॥ ३ ॥**

यदि पूर्वोपदेशः कित्त्वं विधेयम्-स्निहित्वा स्नेहित्वा, सिस्निहिषति, सिस्नेहिषति । 'रलो व्युपधाद्धलादेः' [ १ । २ । २६ ] इति कित्त्वं न प्राप्नोति ।

क्सविधिः । क्सश्च विधेयः—अधुक्षत्, अलिक्षत् । 'शल इगुपधादनिटः क्सः' [ ३ । १ । ४५ ] इति क्सो न प्राप्नोति ।

इड्विधिः । इट् च विधेयः—रुदिहि, स्वपिहि वलादिलक्षण इण्न प्राप्नोति* ।

झल्ग्रहणानि च । किम् ? अहकाराणि स्युः । तत्र को दोषः ? 'झलो झलि' [ ८ । २ । २६ ] इतीह न स्यात्—अदाग्धाम्, अदाग्धम् । तस्मात्पूर्वश्चैवोपदेष्टव्यः परश्च । यदि च किञ्चिदन्यत्राप्युपदेशे प्रयोजनमस्ति, तत्राप्युदेशः कर्तव्यः† ।

**प्र०—शश्छोऽटीति** । हकारपरस्य शकारस्याऽसम्भवात् प्रसङ्गोऽचिन्त्य एतत् ।
**उत्वे चेति** । अरुत्वमपि न प्राप्नोतीति वक्तव्यं 'भो हसती'ति रोर्यत्वार्थम् ।
**यदि च किञ्चिदिति** । प्रयोजनार्थो हि वर्णानामुपदेशो, न स्वरूपप्रतिपत्त्यर्थः ।

उ०—विनोच्चारणस्याऽसाधुत्वेन तादृशोदाहरणाऽभाव इत्याशयात् । अत्र च भाष्य एतदुदाहरणदानमेव मानम् । **आतोऽटिदीर्घादटीत्युभयोरुदाहरणं महाँ हि स इति** । **अट्कुप्वि**ति सूत्रेऽपि ग्रहणफलमर्हेणेति बोध्यम् ।

**अरुत्वमपीति** । इदमित्त्वस्याप्युपलक्षणम् । तेन लिलिहिद्व इत्यादौ **विभाषेट** इति हत्वविकल्पमिद्धिरिति केचित् । भाष्ये हशि चेति सिद्धान्तरीत्या निर्देशः । इदानीं तु **यशि चेति** सूत्रम् ।

**अहकाराणि स्युरिति** । अतस्तत्र हकारग्रहणं कर्तव्यमिति भावः । **अदाग्धामिति** । घत्वस्याऽसिद्धत्वादिति भावः ।

स्वरूपप्रतिपत्त्यर्थ एवायमक्षरसमाम्नाय इति भ्रमं वारयति—भाष्ये **यदि च किंचिदिति** । तद्व्याचष्टे—**प्रयोजनार्थं इति** । शास्त्रीयप्रयोजनार्थ इत्यर्थः । एवं चाऽऽद्यहकारस्याऽशिणोरपि प्रयोजनं सूचितम् । अत एव 'मह्या हसन्ती'ति 'पुयोगा'दिति सूत्रे भाष्यप्रयोगः सङ्गच्छते । एतेन पूर्वहकारोपदेशप्रयोजनवार्तिके न्यूनता परिहृता । **कर्तव्य** इत्यस्य 'स्या'दिति शेषः । **उपदेशोऽत्रोच्चारणमात्रम्** । **अन्यत्रापि**—प्रत्याहारान्तरे । सर्वथा हकारस्य द्वेधोपदेशः कर्त्तव्य इत्यत्राऽस्य तात्पर्यम् ।

* ७ । २ । ७६ ।

† हकारो द्विरुपात्तोऽयमटि शल्यपि वाञ्छता । अर्हेणाधुक्षदित्यत्र द्वयं सिद्धं भविष्यति ॥

इदं विचार्यते—अयं रेफो यकारवकाराभ्यां पूर्व एवोपदिश्येत—'हरयव'डिति, पर एव वा यथान्यासमिति । कश्चात्र विशेषः ?

**रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः ॥ ४ ॥**

रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णानां प्रतिषेधो वक्तव्यः ।

अनुनासिकस्य—स्वर्नयति प्रातर्नयतीति 'यरोऽनुनासिकेऽनुनासिको वा' [ ८ । ४ । ४५ ] इत्यनुनासिकः प्राप्नोति ।

द्विर्वचनस्य—मद्रह्रदः भद्रह्रद इति 'यरः' इति द्विर्वचनं प्राप्नोति† ।

परसवर्णस्य—कुण्डं रथेन वनं रथेन । 'अनुस्वारस्य ययि' [ ८ । ४ । ५८ ] इति परसवर्णः प्राप्नोति ।

अस्तु तर्हि पूर्वोपदेशः ।

**पूर्वोपदेशे किर्त्वप्रतिषेधो व्यलोपवचनं च ॥ ५ ॥**

यदि पूर्वोपदेशः । किर्त्वं प्रतिषेध्यम् । देवित्वा, दिदेविषति । 'रलो व्युपधात्' [ १ । २ । २६ ] इति किर्त्वं प्राप्नोति । नैष दोषः । नैवं विज्ञायते—'रलः व्युपधा'दिति । किं तर्हि ? 'रलः—अव्व्युपधा'दिति । किमिदम्—'अव्व्युपधा'दिति ? अवकारान्ताद्व्युपधादव्युपधादिति ।

---

प्र०—इदमिति । उभयत्रापि दोषप्रयोजनसद्भावात्प्रश्नः ।

स्वर्नयतीति । णकारोऽत्र प्राप्नोति । न ह्यत्र सवर्णग्रहणमस्ति । मद्रह्रद इति । द्विर्वचने कृते तस्याऽसिद्धत्वाद्रोरीति रेफलोपो नास्ति । 'हलो यमा'मिति लोपस्तु पाक्षिक इति पक्षे रेफद्वयश्रवणप्रसङ्ग । कुण्डं रथेनेति । अनुनासिकोऽत्र परसवर्णेन भाव्यमिति नियमाऽभावाद्रेफः प्राप्नोति, तस्य चाऽसिद्धत्वाद्रोरीति लोपो नास्ति ।

---

उ०—दोषप्रयोजनेति । अन्यतरपक्षीयदोष एवान्यतरपक्षे प्रयोजनमिति बोध्यम् ।

णकारोऽत्रेति । स्थानेऽन्तरतमत्वादिति भावः । ननु रेफस्य सवर्णाऽभावात्कथमत्रानुनासिकोऽत आह—नह्यत्रेति । ननु द्वित्वेऽपि 'रोरी'ति 'हलोयमा'मिति वा लोपान्न दोषोऽत आह—द्विर्वचन इति ।

अव्व्युपधादिति । 'अव्' इति लुप्तषष्ठीकम् । ननु पूर्वोपदेशे हय्वरा इत्यादौ यथासङ्ख्यनिर्वाहः कथमिति चेन्न, संज्ञाविधानसामर्थ्येन तत्र तद्भावितपक्षाश्रयणान्न दोषः ।

† ८ । ४ । ४६

'व्यलोपवचनं च'। व्योश्च लोपो वक्तव्यः। गौधेरः। पचेरन्, यजेरन्। 'जीवे रदानुक्' जीरदानुः। वलीति लोपो† न प्राप्नोति। नैष दोषः, रेफोऽप्यत्र निर्दिश्यते—'लोपो व्यो र्वलि' इति। रेफे च वलि चेति।

अथवा पुनरस्तु परोपदेशः। ननु चोक्तम्—"रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः" इति? अनुनासिकपरसवर्णयोस्तावत्प्रतिषेधो न वक्तव्यः, रेफोष्मणां सवर्णा न सन्ति। द्विर्वचनेऽपि, नेमौ रहौ कार्यिणौ द्विर्वचनस्य। किं तर्हि?

प्र०—रेफोष्मणामिति। अनुनासिकपरसवर्णविधाने हि स्थानेन्तरतमपरिभाषोपस्थानाद्दोषाऽभावः। नहि रेफस्य णकारोऽन्तरतमो नाऽप्यनुस्वारस्य रफः।

नेमौ रहाविति। हकारवद्रेफोऽपि न कार्यीत्यर्थः। तत्रैकवाक्यतायां सामान्यविशेषविध्योर्लोकव्यवहारादेव शब्दार्थसम्बन्धपरिज्ञानवत्सामान्यविशेषविशेषविधिबाधकः। प्रत्यक्षश्च विशेषविधिः, सामान्यविधिस्त्वनुमेय इति रेफस्य कार्यित्वं निमित्तत्वेन बाध्यते। दध्युदकादौ तु स्थानित्वेन निमित्तत्वमिकस्तस्मादित्युत्तरस्येत्यादेशप्रकारेण बाध्यते।

उ०—भाष्ये रेफोष्मणामिति। 'विजातीयाः' इति शेषः। तेन सजातीयेषु सत्स्वपि न दोषः। ननु माभूद्रेफस्य विजातीयः सवर्णस्तथाप्यनुनासिकविधौ सवर्णग्रहणाऽभावादनुनासिकः स्यादेवेत्यत आह—अनुनासिकपरेति। नहि रेफस्येति। न च रफस्य णकारः स्थानेनान्तरतमो भवत्येवेति वाच्यम्, स्थानेन्तरतमे इति सप्तम्यन्तपाठे स्थानप्रयत्नोभयान्तरतमस्पृश्'चिन्मात्र'मित्यादौ चरितार्थोऽनुनासिकविधिः प्रयत्नाऽसदृशे रेफे न प्रवर्त्तेत इति भावात्। नापीति। यद्यप्यन्तरतमानन्तरतमयोः प्राप्तावन्तरतमो णकार एवेति स्थानेन्तरतम इत्यनेन नियमः, 'कुण्ड रथेने'त्यादौ चाऽनन्तरतमस्यैव प्राप्तिरितीदमयुक्तम्, तथापि संभवदनुस्वारान्तरतमकेऽङ्कित इत्यादौ चरितार्थः परसवर्णविधी रेफे न प्रवर्त्तेत इति भावः। इदं जातिपक्षे इति केचित्। वस्तुतो व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थोऽस्यां व्यक्तौ न प्रवर्त्तेत इति वक्तुं शक्यम्। उद्वृद्धयतीको यणचीत्यत्र कैयटः—"द्रव्येऽपि पदार्थे त्वुत्सर्गापवादभावः सन्दिग्धत्वाश्रयोऽस्त्येव" इति। केचित्तु स्थानेन्तरतमे इति सप्तम्यन्तपाठप्रत्याख्यानपरभाष्यविरोधेनाऽस्या युक्तेरसंभवदुक्तिकत्वम्। किं चैवं सति ऊष्मग्रहणं भाष्ये व्यर्थं स्यात्। तस्मादनुनासिकविधौ सवर्णपदापकर्षपरं भाष्ये रेफोष्मणामित्यस्य चानुनासिकोऽनुस्वरान्तरतमश्च सवर्णो नास्तीत्यर्थः। अत एव मद्रिष्मानित्यादौ सूत्ररीत्या स्थानप्रयत्नोभयान्तरतमऋकारसम्भवेऽपि नानुनासिकः, नाज्झलाविति निषेधेन सवर्णत्वाऽभावादिति भाष्याशय इत्याहुः।

नन्वयत्वादप्रसक्तं द्वित्वस्य हस्य ग्रहणमयुक्तमत आह—हकारवदिति। ननु एककर्तृकयोर्भोजनपरिवेषणयोर्युगपदसम्भवादस्तु तत्र बाधः;प्रकृते तु लक्ष्यभेदेन भिन्नवाक्यावगतनिमित्तकार्यिभावः किं न स्यात्। यथाऽवगतकार्यित्वस्यापि इको निमित्तत्वं दध्युदकादावत आह—तत्रेति। लक्ष्यभेदेन कार्यित्वनिमित्तत्वसम्भवेऽपीत्यर्थः। सामान्यविशेषविध्योरेकवाक्यतायामित्यन्वयः। शब्दो—वाक्यात्मा। अर्थस्तदर्थः। सम्बन्धः—प्रतिपाद्यप्रतिपादकभावः—एषां परिज्ञानं। तद्यथा लोकव्यवहारादेव, तथा तयोर्बाध्यबाधकभावः सम्भवेऽपि भवतीत्येतदपि लोकव्यवहारादेव ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यादिरूपादवगत-

† ६ । १ । ६६

**निमित्तमिमौ रहौ द्विर्वचनस्य । तद्यथा—'ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाता'मिति × । नेदानीं तौ भुञ्जाते ।**

**इदं विचार्यते—इमेऽयोगवाहा न क्वचिदुपदिश्यन्ते, श्रूयन्ते च† । तेषां कार्यार्थ उपदेशः कर्तव्यः । के पुनरयोगवाहाः ? विसर्जनीयजिह्वामूलीयोपध्मानीया**

---

**प्र०**—लक्ष्यस्थित्यपेक्षणाद्वा बाध्यबाधकभावो न । क्वचिदपेक्षा नास्ति यथा-चिचीषतीति दीर्घत्वद्विर्वचनयोः ।

**इम इति** । विधानादेषा साधुत्वं स्यात् । प्रत्याहारप्रतिबद्धं तु कार्यं न प्राप्नोति । **के पुनरिति**,—तत्स्वरूपप्रश्नः । **कथमिति**—प्रवृत्तिनिमित्तप्रश्नः । **अयुक्ताः**—इत्यस्यैव हेतुकथनम्—**अनुपदिष्टाश्चेति** । **अयुक्ताः** प्रत्याहार लक्षणेन, पाठाभावादसम्बद्धा इत्यर्थः । उपदेशो

---

**उ०**—मित्यर्थः । विशेषसन्निधाने सामान्यशब्दस्य तद्व्यतिरिक्तपरत्वं च तद्बीजम् । **परिज्ञानवदिति** पाठः । एवं चाचोरहाभ्यामित्यत्र सामान्यविशेषविधित्वाऽभावेऽपि तत्र बाधे यद्बीजं तत्प्रकृतेऽप्यस्त्येवेत्याह—**प्रत्यक्षश्चेति** । अविलम्बितप्रतीतिकत्वं **प्रत्यक्षत्वम्** । विलम्बितनत्कत्वं **चानुमेयत्वम्** । **लक्ष्येति** । ज्ञापकाल्लक्ष्यानुरोधाद्वा सत्यपि सामान्यविशेषभावे क्वचिद्बाधकत्वं विशेषविधेर्नाश्रीयते जातिव्यक्तिपक्षयोरुभयोरपीति भावः । **क्वचिदपेक्षा नास्तीति** । 'बाध्यबाधकभावस्ये'ति शेषः । **यथेति** । बाध्यबाधकभावाऽभावे दृष्टान्तोऽयम् । न तु कार्यित्वनिमित्तत्वयोः समावेश इति बोध्यम् । **केचित्तु तक्रकौण्डिन्यन्यायो**ऽपि सामान्यविषयानाक्रान्तविषयाभावरूपानवकाशत्वमूलक एव । अस्ति च प्रकृते तत् । **न ह्येतद्बाधनिमित्तत्वं** सामान्ययत्वप्रयुक्तकार्यित्वानाक्रान्तं क्वचिदप्यस्ति, सर्वत्राचः परत्वादनचीत्यस्य प्राप्तेः, अतोऽयुक्तो लक्ष्यानुरोधात्सामान्येन कार्यित्वबाधः । न चैवमिको यणित्यादौ; मत्वर्थ इत्यादौ सामान्यप्राप्तनिमित्तत्वाभावेन कार्यित्वस्य चारितार्थ्यादिति भाष्याभिप्रायमाहुः ।

ननु **कार्यार्थ** इत्यत्र कार्यं साधुत्वं चेत् '**खरवसानयो**'रित्यादिना सिद्धमत आह—**विधानादिति** । **उपदिश्यन्त** इति पाठे—भाष्ये वर्तमान सामीप्ये लट् । उपदिष्टा इत्य**र्थः** । **प्रवृत्तिनिमित्तेति** । प्रकृते भासमानवैशिष्ट्यप्रतियोगिरूपः प्रकारस्थमर्थ इति भावः । केन प्रवृत्तिनिमित्तेनाऽयोगवाहशब्दवाच्यतैषामित्यत्र तात्पर्यम् । नन्व**नुपदिष्टाश्चे**ति चकारश्रवणादनुच्चारितत्वमयोगवाहशब्दस्य प्रवृत्तिनिमित्तान्तरमित्याभाति, तदयुक्तम्, अनुपदेशपदार्थस्यानुच्चारणस्य तत्राऽभावात्, प्रयोगेषूच्चारितत्वात् । न च प्रत्याहारसूत्रानुच्चारितत्वं तथा; **यदयुक्ता** इत्यनेनैव तदर्थलाभेन पौनरुक्त्यापत्तेरत आह—**अयुक्ता इत्यस्यैव हेतुकथनमिति** । प्रत्याहारबोधकलक्षणेनाऽयुक्ता इत्यन्वयः । तद्व्याचष्टे—**पाठाभावादिति** । ग्रहणकशास्त्रेण प्रदेशे प्रवर्तमानेन यो वर्णस्तेषां ग्राहकस्तस्य पाठाऽभावादित्य**प्यर्थः** । **एषां नास्तीति** । अतोऽयुक्ता इत्य**र्थः** ।

---

× परिवेविष्टामिति पाठान्तरम् ।

† खरवसानयो**र्विसर्जनीयः** ( ८ । ३ । १५ ), विसर्जनीयस्य सः ( ८ । ३ । ३४ ), कुप्वोः ≍**क** ≍**पौ** च ( ८ । ३ । ३७ ), मोऽ**नुस्वारः** ( ८ । ३ । २३ ) इत्यादिसूत्रेषु श्रूयन्ते, परन्त्विमे प्रत्याहारसूत्रेषु नोपदिष्टाः पाणिनिने**त्यर्थः** ।

नुस्वारनासिक्ययमाः‡ । कथं पुनरयोगवाहाः ? यदयुक्ता वहन्ति, अनुपदिष्टाश्च श्रूयन्ते । क्व पुनरेषामुपदेशः कर्तव्यः ?

**अयोगवाहानामट्सु, णत्वम् ॥ ६ ॥**

अयोगवाहानामट्सूपदेशः कर्तव्यः । किं प्रयोजनम् ? 'णत्वम्' । उरःकेण उरᳲकेण, उरःपेण, उरᳲपेण । 'अड्व्यवाये' इति णत्वं सिद्धं भवति† ।

**शर्षु जश्भावषत्वे ॥ ७ ॥**

शर्षूपदेशः कर्तव्यः । किं प्रयोजनम् । जश्भावषत्वे । अयमुब्जिरुपध्मानीयोपधः पठ्यते, तस्य जश्त्वे कृते उब्जिता उब्जितुमित्येतद्रूपं यथा स्यात्* ।

प्र०—द्विविध पाठो, ग्रहणकशास्त्रेण प्रत्यायन च । स द्विविधोऽप्येषा नास्तीत्यर्थः । चशब्दो हेतौ । यतोऽनुपादिष्टास्ततोऽयुक्ता इत्यर्थः । क्वचित्तु चशब्दो न पठ्यते ।

शर्ष्विति । शर्षु पाठे झल्त्वमिति झलां जश्झशीति जश्त्वं सिध्यति ।

उ०—एवं चाक्षरसमाम्नायेऽयुक्ताः सन्तो वहन्ति प्रयोगं निर्वाहयन्तीत्ययोगवाहपदव्युत्पत्तिर्दर्शिता । न पठ्यत इति । तत्र 'यत' इत्यध्याहार्यमिति भावः ।

भाष्ये—उरः केणेति । उरः कायतीति सुबुत्पत्तेः पूर्वं समासेऽपि सोपदादाविति न सत्वम् । पाशकल्पककाम्येष्वेव तत्प्रवृत्तेः ।

ननु शरां जशो भवन्तीति लक्षणाऽभावाच्छर्षु पाठस्य न जश्भावः प्रयोजनमत आह—शर्षु पाठे इति ।

‡ पाणिनीयशिक्षाया ( वर्णोच्चारणशिक्षाया ) दयानन्दसरस्वती—कृतव्याख्यायामयोगवाहाना स्वरूपमेवमुपलभ्यते—

**अयोगवाहरूप**

| | |
|---|---|
| : विसर्जनीय | ꣳ ह्रस्व |
| ᳵ जिह्वामूलीय | ꣴ दीर्घ |
| ᳶ उपध्मानीय | ँ अनुनासिक चिह्न |
| . अनुस्वार | ळ और यह अक्षर |
| | इन चार को यम भी कहते हैं । |

कात्यायनीये शुक्लयजुःप्रातिशाख्येऽयोगवाहा एवं व्याख्याताः—

"अथायोगवाहाः ॥ ८ । ८ ॥ ᳲक इति जिह्वामूलीयः ॥ ८ । ९ ॥ ᳲप इत्युपध्मानीयः ॥ ८ । १० ॥ अं इत्यनुस्वारः ॥ ८ । ११ ॥ अः इति विसर्जनीयः ॥ ८ । १२ ॥ हुँ इति नासिक्यः ॥ ८ । १३ ॥ 'अयमृक्शाखाया प्रसिद्धः' इत्युव्वटः ।

कुँ खुँ गुँ घुँ इति यमाः ॥ ८ । १४ ॥"

† ८ । ४ । २ । * ८ । ४ । ५३ ।

यद्युब्जिरुपध्मानीयोपधः पठ्यत उब्जिजिषतीत्युपध्मानीयादेरेव द्विर्वचनं प्राप्नोति। दकारोपधे पुनर्'न न्द्राः संयोगादयः' [ ६ । १ । ३ ] इति प्रतिषेधः सिद्धो भवति।

यदि दकारोपधः पठ्यते, का रूपसिद्धिः ? उब्जिता उब्जितुमिति। असिद्धे भ उद्जेः। इदमस्ति—'स्तोः श्चुना श्चुः' [ ८ । ४ । ४० ] इति, ततो वक्ष्यामि 'भ उद्जेः'। उद्जेः श्चुना सन्निपाते भो भवतीति। तर्हि वक्तव्यम् ? न वक्तव्यम्। निपातनादेव सिद्धम्। किं निपातनम् ? 'भुजन्युब्जौ पाण्युपतापयोः' [ ७ । ३ । ६१ ] इति। इहापि तर्हि प्राप्नोति—अभ्युद्गः समुद्ग इति। अकुत्व-विषये तन्निपातनम्। अथवा नैतदुब्जे रूपं गमेरेतद्डुपसर्गाड्डो विधीयते,—अभ्युद्गतोऽभ्युद्गः, समुद्गतः समुद्ग इति।

प्र०—उपध्मानीयादेरिति। यदिद्विर्वचने पूर्वत्र कर्तव्ये जश्त्वमसिद्धमथापि पूर्वत्रासिद्धीयमद्विर्वचन इति सिद्धं, सर्वथोबिब्जिषतीति प्राप्नोति।

निपातनादिति। द्विर्वचनं कथम्। निपातनाद्वाक्यभेदोऽनुमीयते—असिद्धप्रकरणे स्तोः श्चुना श्चुरित्यत्रोद्जेर्भ इति तत्र 'न न्द्रा' इति दकारस्य द्विर्वचननिषेधः कर्तव्यो न तु द्विर्वचनमिति पूर्वत्रासिद्धीयमद्विर्वचन इत्यस्याऽप्रवृत्त्या भत्वस्याऽसिद्धत्वादिष्टद्विर्वचनसिद्धिः। अथापि न वाक्यभेदानुमानं निपातनमेव प्रतिपादकं तथापि दकारोपदेशसामर्थ्याद्द्विर्वचने कृते दकारस्य बत्व प्रवर्तते।

अकुत्वविषय इति। विशिष्टविषयमनुमानमित्यर्थः।

उ०—यदीति। पूर्वत्र द्विर्वचने इत्यन्वयः। ननु पूर्वं द्वित्वे जश्त्वात्पूर्वमेव हलादिः शेषे कथमुपध्मानीयस्याऽभ्यासे जश्त्वं, झश्परत्वाऽभावात्। 'अभ्यासे चर्चे'त्यनेन स्थान्तरतम्यात्प्रकृतिचरा चर एवेति उपध्मानीय एव स्यादिति चेच्चिन्त्यमेवैतत्। उपध्मानीयश्रवणापादनेनापि भाष्यसामञ्जस्यात्। अन्ये तु द्वित्वे कृतेपि द्वित्वाश्रयस्य कार्ये कर्तव्येऽसिद्धत्वं नेत्यपि पूर्वत्रासिद्धीयमित्यस्यार्थ इति, परत्वाज्जश्त्वे कृते एव हलादिः शेषः इत्याशयान्न दोषः।

द्विर्वचनं कथमिति। 'बकाररहितस्ये'ति शेषः। ननु निपातनाल्लक्षणमात्रं स्यान्न तु प्रदेशविशेषावच्छिन्नमत आह—अथापीति। न चाभ्युद्ग इत्यादौ दकारोच्चारणं सार्थकं, नैतदुब्जे रूपमिति भाष्योक्त्या दोषाऽभावात्। उपतापातिरिक्तविषयेऽस्माद्घञ् नानभिधानादिति तदाशयः। अकुत्वविषये निपातनमिति पक्षान्तरे त्वाद्यमेव समाधानम्।

षत्वं च प्रयोजनम् । सर्पिःषु धनुःषु । 'शर्व्यवाये' इति षत्वं सिद्धं भवति । 'नुम्विसर्जनीयशर्व्यवायेऽपि' [ ८ । ३ । ५८ ] इति विसर्जनीयग्रहणं न कर्तव्यं भवति । नुमश्चापि तर्हि ग्रहणं शक्यमकर्तुम् । कथं सर्पींषि धनूंषि ? अनुस्वारे कृते 'शर्व्यवाये' इत्येव सिद्धम् । अवश्यं नुमो ग्रहणं कर्तव्यम् । अनुस्वारविशेषणं नुम्ग्रहणम्, नुमो योऽनुस्वारस्तत्र यथा स्यादिह मा भूत्पुंस्विति ।

*अथवाऽविशेषेणोपदेशः कर्तव्यः । किं प्रयोजनम् ?*

***अविशेषेण संयोगोपधासंज्ञाऽलोन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधाः ॥८॥***

अविशेषेण संयोगसंज्ञा प्रयोजनम् । ऊ३ब्जक । 'हलोऽनन्तराः संयोगः' [ १ । १ । ७ ] इति संयोगसंज्ञा, 'संयोगे गुरु' [ १ । ४ । ११ ] इति गुरुसंज्ञा 'गुरो' रिति प्लुतो भवति* ।

उपधासंज्ञा च प्रयोजनम्† दुष्कृतं, निष्कृतम् । दुष्पीतं, निष्पीतम् । 'इदुदुपधस्य चाऽप्रत्ययस्य' [ ८ । ३ । ४१ ] इति षत्वं सिद्धं भवति । नैतदस्ति प्रयोजनम् । नेह इदुदुपधग्रहणेन विसर्जनीयो विशेष्यते । किं तर्हि ? सकारो विशेष्यते —'इदुदुपधस्य सकारस्य यो विसर्जनीय' इति । अथ चोपधाग्रहणं न करिष्यते,

---

प्र०—**अवश्यमिति** । अनुस्वारस्य शर्त्वात्तद्व्यवाये षत्वे सिद्धे **नुम्ग्रहणं** नियमार्थम्—'नुमो योऽनुस्वारस्तत्रैव यथा स्यादन्यत्र मा भूत्'—पुंस्विति ।

**अविशेषेणेति** । प्रयोजनविशेषमनपेक्ष्य सकलप्रयोजनोद्देश्येन यत्र यत्र प्रदेशे प्रयोजनसिद्धिस्तत्र तत्रोपदेशः कार्य इत्यर्थः ।

**ऊ३ब्जक इति** । उपध्मानीयस्य जश्त्वे कृते संयोगसंज्ञाया तस्याऽसिद्धत्वात्संयोगसंज्ञा-

उ०—**अनुस्वारस्य शर्त्वादिति** । यद्यपि इण्कवर्गाभ्यामुत्तरो नुमा व्यवहितः सकारः 'सुहिन्सु' इत्यादौ संभवति, तथापि तदनभिधानमिति भावः । पुंस्वित्यत्र **संपुङ्कानामित्येतत्प्रवृत्तिपरविवरणग्रन्थस्तु** चिन्त्य एव । तस्य **समस्सुटि, पुमः खय्यम्परे, कानाम्रेडिते** इति सूत्रत्रयमात्रविषयत्वात् ।

ननु सूत्रविशेषानाश्रयणे तत्प्रत्याहाराऽसंनिवेशात्कथं तन्निबन्धनकार्यप्रवृत्तिरत आह—**प्रयोजनविशेषमिति** । **अविशेषेणेति**—भाष्यस्य प्रयोजनविशेषनिर्देशं विनेत्यर्थ इति भावः । **यत्र यत्रेत्यादि** । यद्यत्प्रयोजनसिद्धिरुद्देश्या तत्तद्विषयसकलप्रयोजनोद्देशेनेत्यर्थः ।

**जश्त्वे कृते संयोगसंज्ञायामिति** । कार्यकालपक्षे इदम् ।

भाष्ये **इदुदुपधस्येति** । विसर्गस्याऽत्वे ह्युपधात्वमिति भावः ।

**इदुदुपधस्य सकारस्येति** । विसर्गस्थान्युपलक्षणमेतत् । अत एव निरोपि 'निष्कृत'मिति

* ८ । २ । ८६ । † १ । १ । ६५ ।

इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्यामः—'इदुद्भ्यामुत्तरस्य विसर्जनीयस्ये'ति ।

**अलोन्त्यविधिः प्रयोजनम्**× वृक्षस्तरति । प्लक्षस्तरति । अलोन्त्यस्य विधयो भवन्तीत्यलोन्त्यस्य सत्वं सिद्धं भवति+ । एतदपि नास्ति प्रयोजनम्—'निर्दिश्यमानस्यादेशा भवन्ती'ति विसर्जनीयस्यैव भविष्यति ।

*द्विर्वचनं प्रयोजनम्*-उर ≍ ≍कः । उर ≍ ≍पः । 'अनचि च' [ ८ । ४ । ४७ ] अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं सिद्धं भवति ।

**स्थानिवद्भावप्रतिषेधश्च प्रयोजनम्**-यथेह भवति-उरःकेण, उरःपेणेति-'अड्व्यवाये''* इति णत्वम्; एवमिहापि स्थानिवद्भावात्प्राप्नोति—व्यूढोरस्केन महोरस्केनेति । तत्र अनल्विधाविति प्रतिषेधः† सिद्धो भवति ।

किं पुनरिमे वर्णा अर्थवन्त आहोस्विदनर्थकाः ?

**अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् ॥ ६ ॥**

अर्थवन्तो वर्णाः । कुतः ? धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्' । धातव एकवर्णा अर्थवन्तो दृश्यन्ते-एति, अध्येति, अधीत इति । प्रातिपदिकान्येकवर्णान्यर्थवन्ति—आभ्याम्, एभिः, एषु । प्रत्यया एकवर्णा अर्थवन्तः,-

प्र०—ऽभाव द्विगुरुत्वाऽभावात्प्लुतो न स्यात् ।

**महोरस्केनेति** । 'पूर्वत्रासिद्धीये न स्थानिव'दिति निषेधो'ऽचः परस्मिन्पूर्वविधा'वित्यस्य, न तु 'स्थानिवदादेश'इत्यस्य ।

इदानीमन्यदपि वर्णगत वस्तु विचार्यते—**किं पुनरिति** । पक्षद्वयेऽपि प्रतिवर्णं विभक्त्यनुत्पत्तिज्ञानं विचारस्य प्रयोजनम् ।

उ०—सिध्यति । अत एव वक्ष्यमाणपक्षान्तरेणाऽविरोधः । 'निष्कृत'—मित्यादौ सुबुत्पत्तेः पूर्वं समासेऽपि **इणः ष** इति न, पाशकल्पककाम्येष्वेव तत्प्रवृत्तेः ।

**द्विर्वचनं प्रयोजनमिति** । विसर्गजिह्वामूलीयादेर्द्विरुच्चारणे विशेषस्याऽग्रहादुच्चारणस्य कर्तुमशक्यत्वाच्च शास्त्रप्राप्तिमात्रेणैतत्प्रयोजनकथनमिति सन्तोष्टव्यम् ।

ननु **सोपदादाविति** सत्वस्य स्थानिवत्त्वं **पूर्वत्रासिद्धीये** इति निषेधान्नेत्यत आह—**पूर्वत्रेति** ।

**इमे** इत्यनेन न **हयवरट्**सूत्रस्था एव गृह्यन्ते, किं तु वर्णमात्रमित्याह—**इदानीमिति** । **अर्थवन्त** इति साध्यम् । **वर्णा** इति पक्षः । पक्षतावच्छेदकमेव हेतुः । 'धातुप्रातिपदिके'त्यादिस्तु दृष्टान्तः । **अनुत्पत्तिज्ञानम्**—अनुत्पत्त्युपायज्ञानम् ।

भाष्ये **धातव इत्यादि** । प्रक्रियाश्रयप्रकृतिप्रत्ययानां वाचकत्वमित्येवं रूपवर्णस्फोटाश्रयेण । अयंच

× १ । १ । ५२ + ८ । ३ । ३४ * ८ । ४ । २ । † १ । १ । ५६ ।

औपगवः कापटवः । निपाता एकवर्णा अर्थवन्तः, अ अपेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ, ए॰ आक्राम । धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनान्मन्यामहे—'अर्थवन्तो वर्णाः' इति ।

**वर्णव्यत्यये चार्थान्तरगमनात् ॥ १० ॥**

वर्णव्यत्यये चार्थान्तरगमनान्मन्यामहे'ऽर्थवन्तो वर्णा' इति । कूपः सूपो यूप इति । 'कूप' इति सककारेण कश्चिदर्थो गम्यते । 'सूप' इति ककारापाये सकारोपजने चार्थान्तरं गम्यते । 'यूप' इति ककारसकाराऽपाये यकारोपजने चार्थान्तरं गम्यते । ते मन्यामहे—'यः कूपे कूपार्थःस ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्ये'ति ।

**वर्णानुपलब्धौ चानर्थगतेः ॥ ११ ॥**

वर्णानुपलब्धौ चानर्थगतेर्मन्यामहे'ऽर्थवन्तो वर्णा' इति । वृक्ष ऋक्षः, काण्डीर आण्डीरः । 'वृक्ष' इति सवकारेण कश्चिदर्थो गम्यते, 'ऋक्ष' इति वकारापाये सोऽर्थो न गम्यते । 'काण्डीर'इति सककारेण कश्चिदर्थो गम्यते, 'आण्डीर' इति ककारापाये सोऽर्थो न गम्यते । किं तर्ह्युच्यते—'अनर्थगते'रिति । न साधीयो ह्यत्राऽर्थस्य गतिर्भवति ।

प्र०—**वर्णव्यत्यय** इति । एकस्य वर्णस्याभ्युपगमेऽन्याऽपगमो **व्यत्ययः** । **सककारे**णेति । तस्यैवाऽन्वयव्यतिरेकावनुविधत्तेऽर्थावसाय इति भाव. ।

**वर्णानुपलब्धौ चेति** । अर्थान्तरावगमात्प्रकृतोऽर्थो न गम्यत इति विवक्षितम् ।

इतरस्त्वर्थावगत्यभावमात्रमनेनोक्तमिति मत्वा पृच्छति--**किं तर्हीति** । **न साधीय इति** । परमतापेक्षया प्रकर्ष आरोप्यते । यथा 'न किञ्चिदय तत्र करोती'त्युक्ते कश्चिदाह 'सुतरामय करोती'ति

उ०—शास्त्रव्यवहारमात्रोपयोगी । एतद्वासनावशादेव लोकव्यवहारेऽपि शास्त्रज्ञास्तथा व्यवहरन्ति; धर्मे चैवं विधज्ञानस्योपयोग इति बोध्यम् ।

हेत्वन्तरमाह—**वर्णव्यत्यये चेति** । ननु कूपादौ न सिंहादाविव वर्णव्यत्ययोऽत आह-**एकस्येति** । **तस्यैवान्वयेनि** । 'ऊप'शब्दस्य तु तदीयशक्त्युद्बोधकत्वरूपं द्योतकत्वं, प्रादिवत् । अत एव तत्रामित्रेषामपि प्रातिपदिकसंज्ञापादनं करिष्यते ।

तृतीयहेतुमाह—**वर्णानुपलब्धौ चेति** । 'अनर्थगत'रित्यस्य तद्वर्णसत्ताया योऽर्थस्तदर्थानवगतेरित्यर्थ इत्याह—**अर्थान्तरेति** ।

प्रश्नमुपपादयति---भाष्ये—**न साधीय इति** । नञि काकुः । **परमतापेक्षयेति** । परेणानर्थगतेरित्युक्त्वादिहार्थगतिरस्तीत्यभ्युपगमस्य परमत कटाक्षेण, अन्यस्थलीयार्थगत्यपेक्षयाऽत्रातिशयेनाऽर्थगतिरस्तीति विवक्षेति भावः ।

१ इदं क्वचिन्न ।

एवं तर्हीदं पठितव्यं स्यात्—'वर्णानुपलब्धौ चाऽतदर्थगते'रिति। किमिदम्—'अतदर्थगते'रिति ? तस्यार्थस्तदर्थः, तदर्थस्य गतिस्तदर्थगतिः, न तदर्थगतिरतदर्थगतिरतदर्थगतेरिति। अथवा सोऽर्थस्तदर्थस्तदर्थस्य गतिस्तदर्थगतिर्न तदर्थगतिरतदर्थगतिरतदर्थगतेरिति। स तर्हि तथा निर्देशः कर्तव्यः ? न कर्तव्यः। उत्तरपदलोपोऽत्र द्रष्टव्यः। तद्यथा—उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः। खरमुखः। एवमतदर्थगतेरनर्थगतेरिति।

**सङ्घातार्थवत्त्वाच्च ॥ १२ ॥**

सङ्घातार्थवत्त्वाच्च मन्यामहे'ऽर्थवन्तो वर्णा' इति। येषां सङ्घाता अर्थवन्तोऽवयवा अपि तेषामर्थवन्तः। येषां पुनरवयवा अनर्थकाः समुदाया अपि तेषामनर्थकाः। तद्यथा—एकश्चक्षुष्मान्दर्शने समर्थः तत्समुदायश्च शतमपि समर्थम्। एकश्च तिलस्तैलदाने समर्थस्तत्समुदायश्च खार्यपि तैलदाने समर्था। येषां पुनरवयवा अनर्थकाः, समुदाया अपि तेषामनर्थकाः। तद्यथा—एकोऽन्धो दर्शनेऽसमर्थस्तत्समुदायश्च शतमप्यसमर्थम्। एका च सिकता तैलदानेऽसमर्था, तत्समुदायश्च खारीशतमप्यसमर्थम्।

---

प्र०—**एवं तर्हीति**। प्रकृतोऽर्थो न गम्यतेऽर्थान्तरं तु गम्यत इत्यर्थः। **तस्यार्थ इति**। तस्य वर्णस्य। पर प्रति वर्णानामर्थवत्त्वमसिद्धमिति कथं तस्येति वर्णः परामृश्यत इत्याह—**सोऽर्थ इति**। प्रकृतोऽर्थ इत्यर्थः।

**उष्ट्रमुख इति**। गतार्थत्वादप्रयोग एव द्वितीयस्य मुखशब्दस्य लोपोऽभिधीयते। अत्र हि उष्ट्रो मुखमस्येत्येव विग्रहः। न च प्राणी प्राण्यन्तरस्य मुख सभवतीति विशिष्टावयववृत्तिरुष्ट्रशब्द सादृश्यान्मुख विशिनष्टि। एवमिहाप्यनर्थगतेरित्यत्राऽर्थशब्देन प्रक्रान्तोऽर्थ उच्यते, नार्थमात्रमित्यर्थ.।

---

उ०—तच्छब्दार्थमाह—**वर्णस्येति**। परे तु तच्छब्देन तद्वर्णघटितपरामर्शे न कश्चिद्दोषः। अत एव पूर्वं भाष्ये **सककारेण कश्चिदर्थो गम्यत** इत्युक्तमित्याहुः। लाघवेन तु कर्मधारयमाह भाष्ये—**सोऽर्थ इति**। प्रकृतोऽर्थः—तस्मिन्वर्णे सति योऽर्थः प्रतीयते स इत्यर्थः।

ननु दृष्टान्ते **सप्तम्युपमानपूर्वेति** वचनेनोत्तरपदलोपेऽपि प्रकृते तच्छब्दलोपः केन। किं च तच्छब्द उत्तरपदमपि न, तच्छब्देन नञः समासाऽभावादत आह—**गतार्थत्वादिति**। तथा च तद्वदत्रापि लक्षणेति भावः।

चतुर्थहेतुमाह—भाष्ये—**सङ्घातार्थवत्त्वाच्चेति**। **एका सिकतेति** भाष्यप्रयोगादेव सिकता शब्दस्यैकवचनान्तत्वमपि।

**यदि तर्हीमे वर्णा अर्थवन्तोऽर्थवत्कृतानि प्राप्नुवन्ति । कानि ? 'अर्थवत्प्रातिपदिक'मिति† प्रातिपदिकसंज्ञा, 'प्रातिपदिका'‡ दिति स्वाद्युत्पत्तिः, 'सुबन्तं पद'मिति+ पदसंज्ञा । तत्र को दोषः ? 'पदस्ये'ति नलोपादीनि प्राप्नुवन्ति× धनं वनमिति ।**

**सङ्घातस्यैकार्थ्यात्सुबभावो वर्णात् ॥ १३ ॥**

**सङ्घातस्यैकत्वमर्थः । तेन वर्णात्सुबुत्पत्तिर्न भविष्यति ।**

---

**प्र०—नलोपादीनीति** । श्रवणं नु विभक्तेर्न भवति, यतो यदैवावयवानां प्रातिपदिकसंज्ञा प्रवर्तते तदैव समुदायस्यापि । तत्र तदन्तर्गतत्वाद्विभक्तेर्लुका भवितव्यम् । समासग्रहणेन च तुल्यजातीयस्य सुबन्तावयवसमुदायस्य प्रातिपदिकसंज्ञा निवार्यते, न त्वर्थवत्समुदायमात्रस्य । येनैव चाऽर्थेन समुदायस्यार्ऽर्थवत्त्वं तेनैव तदवयवानामपीति विभक्त्युत्पत्तिश्चोद्यते ।

अत्र परिहारमाह—**सङ्घातस्येति** । 'वृक्ष' इत्यत्रैकत्वं विभक्त्या द्योत्यते । तच्चैकमित्येकैव विभक्तिरुत्पद्यते । यथा बहवो द्रष्टारो दृश्यमर्थमेकेनैव प्रदीपेन पश्यन्ति । सा चोत्पद्यमाना समुदायादेव तन्त्रेण सर्वाऽनुग्राहिण्युत्पद्यते, समुदायद्विर्वचनवत् । पदसंज्ञा तु समुदायस्यैव भवति, न प्रत्येकम् । 'यस्मात्प्रत्ययविधि'—रित्यनुवर्तनादसुबन्तत्वात् ।

---

**उ०—तदन्तर्गतत्वादिति** । इदं चिन्त्यम् । **इत्थंभूतलक्षण** इति सूत्रस्थस्वग्रन्थविरोधात् । तत्र हि—संज्ञाप्रवृत्त्युत्तरकालजातविभक्तेस्तन्मध्यपतितत्वेऽपि तदमवयवत्वं नेत्युक्तम् । तस्मादन्तरङ्गत्वादवयवप्रातिपदिकत्वे तन्निमित्तसुपि तदनन्तरं कृदन्तत्वनिमित्तकप्रातिपदिकत्वे सुब्लोप इति वक्तुं युक्तम् । 'ध्वनती'त्यादौ तु न तदापत्तिः । धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तदप्राप्तेः । धात्वादेस्तदवयवत्वं तु व्यपदेशिवद्भावेन बोध्यम् । वस्तुत **इत्थंभूतेति सूत्रस्थकैयटोक्तिरयुक्तेति** । तत्रैव निरूपयिष्याम इति न दोषः । धकारेजश्त्वमादिपदार्थः । **सुबन्तावयवसमुदायस्येति** । 'सुबन्तावयवे'ति बहुव्रीहिस्ततः कर्मधारयः । इदमुपलक्षणम्—भेदे सति यदर्थयोः संसर्गस्तद्द्वारकार्थवत्समुदायस्य । तेन तिङन्तसमुदायस्य व्यावृत्तिः । प्रकृते न भेद इत्याह—**येनैवचेति** ।

**तच्चैकमिति** । **सङ्घातस्यैकत्वमिति** भाष्यस्य सङ्घातस्यार्थ एकत्वमर्थः । एवं च विभक्तिः समुदायादेवेति भावः । ननु समुदायादुत्पद्यमाना विभक्तिः **सर्ववर्णसंबन्धिनी** चेत् प्रतिवर्णं पदत्वं प्राप्नोतीत्यत आह—**पदसंज्ञा त्विति** । यतश्चार्थबोधनाय विभक्त्युत्पत्तिस्तस्य संज्ञा प्रवर्तते न त्वन्येषामिति भावः । केचित्तु विभक्ति प्रकृत्यर्थगतप्रकृतिबोध्यसङ्ख्याद्योतिका । सङ्ख्या च समुदायस्यैवार्थो, न प्रत्येकवर्णानामिति न तेभ्यः स्वाद्युत्पत्तिः **एकत्वं सङ्घातस्यार्थ** इति भाष्यस्वरसात् । प्रकृत्यंशे वर्णव्यत्ययाऽपाययोः सङ्ख्यान्तरानुपजननात्सा समुदायस्यैवार्थ इति तद्भावः । न चाव्ययेभ्य इवैकवचनं दुर्वारम् । सङ्ख्यारहितार्थप्रतिपादकेषु तथास्वीकारेऽपि, वस्तुतःसङ्ख्यावत्यर्थे सङ्ख्यानभिधायकस्वाद्युत्पत्तौ मानाऽभावात् । एवंचैषा प्रकृतित्वमेव नेति **न केवला प्रकृतिरि**त्यस्यापि न विषयः । एतेन 'प्रत्येकं पदसंज्ञानुग्रहाय द्विर्वचनवैषम्यात् स्यादेव प्रत्येकं सुबुत्पत्ति' रित्यपास्तमित्याहुः ।

† १।२।४५। ‡ ४।१।१। + १।४।१४। × ८।२।७।

**अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः ॥ १४ ॥**

अनर्थकास्तु वर्णाः । कुतः ? 'प्रतिवर्णमर्थानुपलब्धेः' । न हि प्रतिवर्णमर्था उपलभ्यन्ते । किमिदं प्रतिवर्णमिति ? वर्णं वर्णं प्रति प्रतिवर्णम् ।

**वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनात् ॥ १५ ॥**

वर्णव्यत्ययाऽपायोपजनविकारेष्वर्थदर्शनान्मन्यामहे—'अनर्थका वर्णा' इति । वर्णव्यत्यये—कृतेस्तर्कुः, कसेः सिकताः, हिंसेः सिंहः । वर्णव्यत्ययो नार्थव्यत्ययः । अपायो लोपः । हतः, घ्नन्तिः, घ्नन्तु, अघ्नन् । वर्णापायो नार्थापायः । उपजन आगमः । लविता, लवितुम् । वर्णोपजनो नाऽर्थोपजनः । विकार आदेशः । घातयति घातकः । वर्णविकारो नार्थविकारः । यथैव हि वर्णव्यत्ययाऽपायोपजनविकारा भवन्ति तद्वदर्थव्यत्ययापायोपजनविकारैर्भवितव्यम् । न चेह तद्वत् । अतो मन्यामहे अनर्थका वर्णा' इति ।

उभयमिदं वर्णेषूक्तम्—'अर्थवन्तोऽनर्थका' इति च । किमत्र न्याय्यम् ? उभयमित्याह । कुतः ? स्वभावतः । तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते अपरे न । न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम्, कश्चिद्वाऽनर्थक इति कृत्वा सर्वैरनर्थकैः । तत्र किमस्माभिः शक्यं कर्तुम्—

प्र०—**अनर्थकास्त्विति** । धात्वादिव्यतिरिक्ता वर्णाः पक्षीक्रियन्तेऽन्यथा शास्त्रविरोधः प्राप्नोति । **किमिति** । असमासशङ्कया प्रश्नः, समासेन तूत्तरम् । तेनैव वीप्सा द्योतितेति द्विर्वचनं न भवति ।

**वर्णव्यत्ययेति** । यदुक्तम्—'**वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगते**'रिति, तस्याऽनैकान्तिकत्वमुद्भाव्यते ।

**उभयमित्याहेति** । यत्रान्वयव्यतिरेकाभ्यामर्थवत्ता शक्यते कल्पयितुं तत्रैवासावभ्युप-

उ०—अनुमानेन साधितामर्थवत्ता प्रत्यक्षविरोधेन दूषयति—**अनर्थकास्त्विति** । सर्ववर्णाना पक्षत्वे हेतोर्भागाऽसिद्धत्वं स्यादत आह—**धात्वादीति** । विपक्षे बाधकमाह—**अन्यथेति** । **वर्णव्यत्ययेत्यादिहेतोरर्थानुपलब्धेरिति** हेतोश्च धात्वाद्यतिरिक्तवर्णविषयत्वे एव सङ्गतेरित्यपि बोध्यम् । **असमासाशङ्कयेति** । तथा च वीप्सा न प्रतीयेतेति भावः । **तेनैवेति** । वीप्साया तस्य विधानादिति भावः ।

ननु वर्णव्यत्ययादिष्वर्थदर्शनं नार्थवत्त्वाऽभावासाधकमत आह—**यदुक्तमिति** । एवंचार्थवत्त्वसाधकहेतौ व्यभिचारप्रदर्शनद्वाराऽनर्थकतासाधकत्वमस्य । भाष्ये—**अर्थदर्शनादित्यस्य** वर्णव्यत्ययाद्यभावे योऽर्थस्तस्यैव दर्शनादित्यर्थः । **नार्थव्यत्यय इत्यस्य**—नार्थान्तरावगतिः, किं तु तस्यैवाऽवगतिरित्यर्थः ।

उभयस्य न्याय्यत्वं विषयभेदेनेत्याह—**यत्रान्वयेति** । यथा 'एति' 'इतः' इत्यादौ । **न सर्वत्र**—

*यद्धातुप्रातिपदिकप्रत्ययनिपाता एकवर्णा अर्थवन्तोऽतोऽन्येऽनर्थका इति । स्वाभाविकमेतत् ।*

कथं य एष भवता वर्णानामर्थवत्तायां हेतुरुपदिष्टः—'अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनाद्वर्णव्यत्यये चाऽर्थान्तरगमनाद्वर्णानुपलब्धौ चाऽनर्थगतेः सङ्घातार्थवत्त्वाच्चे'ति ?

सङ्घातान्तराण्येवैतान्येवंजातीयकान्यर्थान्तरेषु वर्तन्ते—कूपः सूपो यूप इति । यदि हि वर्णव्यत्ययकृतमर्थान्तरगमनं स्यात्, भूयिष्ठः कूपार्थः सूपे स्यात्, सूपार्थश्च कूपे, कूपार्थश्च यूपे, यूपार्थश्च कूपे, सूपार्थश्च यूपे, यूपार्थश्च सूपे । यतस्तु खलु न [1]किञ्चित्सूपस्य वा यूपे, यूपस्य वा कूपे, कूपस्य वा यूपे, सूपस्य वा कूपे, कूपस्य वा सूपे, यूपस्य वा सूपे । अतो मन्यामहे—'सङ्घातान्तराण्येतान्येवंजातीयकान्यर्थान्तरेषु वर्तन्ते'इति । इदं खल्वपि—भवता वर्णानामर्थवत्तां ब्रुवता साधीयोऽनर्थकत्वं द्योतितम् । यो हि मन्यते—यः कूपे कूपार्थः स ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्येति । ऊपशब्दस्त्वस्याऽनर्थकः स्यात् ।

तत्रेदमपरिहृतम्—'सङ्घातार्थवत्त्वाच्चे'ति ।

एतस्यापि प्रातिपदिकसंज्ञायां परिहारं वक्ष्यति‡ ।

---

प्र०—गन्तव्या, न सर्वत्रेत्यर्थः ।

सङ्घातान्तराणीति । तदुक्तं—'न कूपसूपयूपानामन्वयोऽर्थस्य विद्यते । अतोऽर्थान्तरवाचित्वं सङ्घातस्यैव गम्यते ॥'† इति ।

एतस्यापीति । 'दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः सुराङ्गवद्रथाङ्गवच्चे'ति ।

---

उ०—कूपादावित्यर्थः ।

न कूपसूपेति । वर्णानामर्थवत्त्वे ऊपशब्दस्य त्रिष्वन्वयादर्थान्वयः स्यान्न च दृश्यतेऽतः समुदायान्तरत्वप्रयुक्तमेवार्थान्तरत्वं तदर्थानवगतिश्च न तु व्यत्ययादिकृतमित्यर्थः । ननु ककारसकारयकाराणामेवार्थवत्त्वमूपस्तु शक्त्युद्बोधक एवेति कस्यार्थस्य सत्ता तत्र तत्रापाद्यत इति चेत्तर्हि भग्नमेव वर्णानामर्थवत्त्वम् । तत्रैव पदे ऊपयोरर्थाऽभावात् । किं च 'सङ्घस्य समुदायस्यैवार्थ' इत्यपि नियन्तुमशक्यं, कूपगतैकत्वस्य यूपादिभिरप्रतीत्या सङ्ख्याया अपि कादिभिरन्वयव्यतिरेकसत्त्वात् । द्विर्वचनेन वैषम्यं तु प्रागुक्तमेव । तस्मात्समुदायस्यैवार्थवत्त्वम् । तदेव ध्वनयन्नाह—भाष्ये—इदं खल्वपीत्यादि ।

दृष्टो हीति । अतदर्थेन रथाङ्गेन गुणिनो रथस्य यथार्थवत्ता तथा प्रकृतेपीति भावः ।

---

१—'कश्चि'दिति पाठान्तरम् । ‡ १ । २ । ४५*

† वाक्यपदीये द्वितीयकाण्डे १७० कारिका

**अइउण् ऋलृक् एओङ् ऐऔच् ।**

**प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।**

**य एतेऽक्षु प्रत्याहारार्था अनुबन्धाः क्रियन्ते, एतेषामज्ग्रहणेन[1] ग्रहणं कस्मान्न भवति? किं च स्यात्? दधि णकारीयति, मधु णकारीयतीति 'इको यणचि' [ ६ । १ । ७७ ] इति यणादेशः प्रसज्येत ।**

**आचारात्**

**किमिदमाचारादिति? आचार्याणामुपचारात् । नैतेष्वाचार्या अच्कार्याणि कृतवन्तः ।**

**अप्रधानत्वात्**

**अप्रधानत्वाच्च । न खल्वप्येतेषामक्षु प्राधान्येनोपदेशः क्रियते । क्व तर्हि? हल्षु । कुत एतत्? एषा ह्याचार्यस्य[2] शैली लक्ष्यते—यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति—अचोऽक्षु हलो हल्षु ।**

प्र०—**आचारादिति** । **आचारो**—व्यवहारः । **'तृषिमृषिकृषे'**रिति यरान कृतः ।

**अप्रधानत्वादिति** । 'प्रधानाऽप्रधानसंनिधौ प्रधानमेव कार्याणां प्रयोजक'मिति परार्थानामनुबन्धानामच्संज्ञा न प्रवर्तत इत्यर्थः ।

**शैलीति** । शीले भवा **शैली**—समवधानपूर्विका प्रवृत्तिः । यथा लोके ब्राह्मणैः सह ब्राह्मणा भोज्यन्ते क्षत्रियैः सह क्षत्रिया इति एवमिहाऽप्याचार्येण वर्णा निर्दिष्टा इत्यर्थः ।

उ०—भाष्ये—**अज्ग्रहणेष्विति** । **प्रत्याहारे**ऽक्षरसमाम्नायेऽ**ज्ग्रहणेषु**—अच्प्रत्याहारग्राहकेषु, पठितानामनुबन्धाना, प्रत्यासत्त्याऽक्षु ग्रहणं कुतो नेत्यर्थः । तत्फलितार्थमाह—**य एते अक्षु इति** । **तद्बोधकसूत्रेषु**—प्रागुक्तेषु । **प्रत्याहारार्था**स्तदुपकारका । **अज्ग्रहणेन**—अच्शब्देन । अणादिप्रत्याहारेषु तेषां ग्रहणे फलाऽभावं मनसि निधायाऽ**ज्ग्रहणेने**त्युक्तम् । न च हशादौ टग्रहणस्यापत्तिः । हल्षु उच्चारणार्थाकारोच्चारणेनोच्चारणार्थवर्णहीनहलां हल्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात् ।

**प्राधान्येन**—प्रत्याहारेषु ग्रहणार्थत्वेन । **परार्थेति** । अजादिस्वरूपबोधनार्थत्वेन **परार्थत्वम्** । यथाऽकारादयः संज्ञिविशेषसमर्पणायोपात्ता, न तथाऽणादय इत्यर्थः । अप्रधानत्वमप्याचार्याचारेण साधयति—भाष्ये—**आचार्यस्येति** । आचार्यशब्देनाऽनादिः शब्दपुरुषः । एवंचाऽन्यत्र संज्ञिविशेषसमर्पणायोपात्तत्वादितामसञ्ज्ञित्वमेवेति भावः ।

१—'अज्ग्रहणेषु' इति पाठान्तरम् ।

२—'आचार्यपदेन सूत्रकारः पाणिनिर्ग्राह्यः । अचामक्षु हलां च हल्षूपदेशः प्रत्याहारसूत्रेषु दृश्यते सोऽत्रप्रमाणम् । तद् यथा—पूर्वं चतुर्षु सूत्रेषु तावदचामुपदेशः । ततोऽन्तःस्थानां वर्णानां द्वयोः सूत्रयोः । तदनन्तरं क्रमशो वर्गाणां पञ्चम—चतुर्थ—तृतीय—द्वितीय—प्रथमवर्णा उपदिष्टाः । अन्ते चोष्माणः । तुल्यजातीयानां तुल्यजातीयेषूपदेशस्य शैली सुतरामिह घटते ।

**लोपश्च बलवत्तरः ॥**

**लोपः खल्वपि तावद्भवति ।**

**ऊकालोजिति वा योगस्तत्कालानां यथा भवेत् ।**
**अचां ग्रहणमच्कार्यं तेनैषां न भविष्यति ॥**

**अथवा योगविभागः करिष्यते† । 'ऊकालोऽच्' । उ ऊ उ३ इत्येवंकालोऽज्भवति । ततो 'ह्रस्वदीर्घप्लुतः' । ह्रस्वदीर्घप्लुतसंज्ञश्च भवति—ऊकालोऽच् । एवमपि कुक्कुट इत्यत्रापि प्राप्नोति । तस्मात्पूर्वोक्त एव परिहारः ।**

**एष एवार्थः । अपर आह—**

**ह्रस्वादीनां वचनात् प्राग्यावत्तावदेव योगोऽस्तु ।**
**अच्कार्याणि यथा स्युस्तत्कालेष्वस्तु कार्याणि ॥**

---

**प्र०—लोपश्चेति ।** परत्वान्नित्यत्वाद्वा **आदिरन्त्येनेत्यनेना**च्संज्ञाविधानकालेऽनुबन्धानां लोपादसन्निधानादच्संज्ञा न प्रवर्तते । अनुबन्धा ह्युच्चारण एव सन्ति इत्संज्ञाप्रतिबद्धं च कार्यमसन्त एव प्रतिपादयन्ति, स्वतस्तु न किंचित्कार्यं प्रतिपद्यन्ते ।

**ऊकालोऽजिति ।** सिद्धेऽच्त्वे, योगविभागेन कालविशेषावच्छिन्नस्याऽच्त्वं नियम्यते ततोऽनुबन्धानामूकालत्वाऽभावादच्त्वाऽभावः ।

**एवमपीति ।** ककाराकृतेरुपदेशान्मात्रिकस्याऽच्त्वं मन्यते ।

अत्र च यद्यप्ययं परिहारोऽस्ति,—**'द्वावेतौ ककारौ, न च वर्णद्वयेनैका जातिर्व्यज्यते'** इति । तथापि पूर्वमेव 'मात्राकालोऽत्र गम्यते, न च मात्रिकं व्यञ्जनमस्ती'त्युक्तत्वात्पुनरिह नोक्तः ।

---

**उ०—परत्वादित्याद्यन्तरङ्गत्वोपलक्षणम्** । एवं पूर्वमनुबन्धलोपा**दादिरन्त्येनेति** संज्ञाविधानकालेऽसंनिधानादित्यन्वयः । एवं चाऽनुबन्धसदृशभिन्नानामेव मध्यगसदृशानां ग्राह्यता बोधयतीति भावः । भाष्ये—**लोपः खल्वपि तावदिति** । सर्वतः प्रथममित्यर्थः । यत्तु एवमपि **लणित्य**कारस्य हल्षु ग्रहणापत्ते**राचारा**दित्येव समाधिरत्र युक्त इति । तन्न । 'अतोर्लान्तस्ये'ति सूत्रे लकारोच्चारणेन **लण्**सूत्रस्थस्यानुनासिकत्वाऽभावज्ञापनात् । एवं च तस्यानुबन्धत्वमेव न, किन्तूच्चारणार्थत्वमेव । अत एव भाष्येऽ**इउण्**त्यादिसूत्रचतुष्टयोपादानेनैवैतद्विचारप्रवृत्तिः कृता । श्लोके चाऽग्रहणेष्वित्येवोक्तम् । उरण्रपरसूत्रे च लपरत्वस्योपसङ्ख्यानमेव कार्यमिति तुल्यास्यसूत्रे वक्ष्यन् ।

भाष्ये 'तत्कालानामचां ग्रहणमच्पदेन यथा स्यादिति योगविभागः कार्य' इत्यन्वयः । **सिद्धेऽच्त्वे** इति । अकारादीनामुपदेशात्सवर्णग्रहणाच्चेति भावः ।

ननु ककारद्वयस्य मात्रिकवर्णत्वं कथम्, एकस्यैव ऋलृगित्यत्रोपदेशादत आह— **ककाराकृतेरिति** ।

**न च वर्णद्वयेनेति** । जातिरपि स्वपर्याप्त्यधिकरणव्यङ्ग्यैव तद्द्वारैव च कार्यभागिति भावः ।

भाष्ये—**एष एवार्थं इति** । **अपर आहे**त्यादिना वार्तिककृतोक्त इत्यर्थः । **ह्रस्वादीनामिति** । ह्रस्वदीर्घप्लुत इत्यतः प्राग्यावदूकालोऽजिति तावदेवाऽस्तु पृथक्सूत्रम् । फलं दर्शयति—**अच्कार्याणीति** । अज्निमित्तकार्याणि तत्कालेष्वस्तु कर्तुमर्हाणि यथा स्युरित्यन्वयः ।

---

† १ । २ । २७

अथ किमर्थमन्तःस्थानामण्सूपदेशः क्रियते ? इह सँय्यँन्ता सँव्वँत्सरः यँल्लँलोकं तँल्लँलोकमिति परसवर्णस्यासिद्धत्वादनुस्वारस्यैव द्विर्वचनम्† । तत्र परस्य परसवर्णे कृते तस्य यय्ग्रहणेन ग्रहणात् पूर्वस्यापि परसवर्णो यथा स्यात् ।

नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत्, "द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम्"‡ इति । यावता सिद्धत्वमुच्यते परसवर्ण एव तावद्भवति ।

परसवर्णे तर्हि कृते तस्य यर्ग्रहणेन ग्रहणाद्द्विर्वचनं यथा स्यात् । माभूद्द्विर्वचनम् । ननु च भेदो भवति । सति द्विर्वचने त्रियकारकमसति द्विर्वचने द्वियकारकम् । नास्ति भेदः । सत्यपि द्विर्वचने द्वियकारकमेव । कथम् ? 'हलो यमां यमि लोपः' [ ८ । ४ । ६४ ] इत्येवमेकस्य लोपेन भवितव्यम् । एवमपि भेदः । सति द्विर्वचने कदाचिद्द्वियकारकम्, कदाचित्त्रियकारकम् । असति द्वियकारकमेव । स एष कथं भेदो न स्यात् । यदि नित्यो लोपः स्यात् । विभाषा च स लोपः । यथाऽभेदस्तथाऽस्तु+ ।

---

प्र०—**अथ किमर्थमिति** । 'अजुदित्सवर्णस्ये'ति कस्मान्न कृतमितिप्रश्नः । इण्ग्रहणेन ग्रहणार्थस्त्वन्तःस्थानामत्रावश्यं कर्तव्य उपदेशो—गीर्ष्वित्यादौ मूर्धन्यो यथा स्यादिति ।

**ननु च भेद इति** । श्रुतिकृतोऽस्त्येव भेदः सूक्ष्मत्वात्तु दुर्लक्ष्यः ।

---

उ०—**अणः** सुष्ठूपदेशः—**अण्सूपदेशः**=अण्शब्दोच्चारणम् । तदन्तःस्थानां बोधकम्—'अणुदि'दित्यत्र किमर्थं क्रियत इत्यर्थो भाष्यस्येत्याह—**अजुदिदिति** । "**अण्सु** अण्मध्ये । तेनात्र स्थाने किमर्थं उपदेश" इति तु नार्थ इत्याह—**इण्ग्रहणेनेति** ।

**इह सयँ यँन्ते**त्यादिभाष्यं **गुणाभेदका** इति पक्षे । भेदकत्वपक्षे नेदमेवाऽण्ग्रहणं मानमिति भावः । यथास्थितसूत्रन्यासे इदम् । जातिपक्षेणाऽण्ग्रहणप्रत्याख्याने तु न कश्चिद्विचारः । एवं **गुणा अभेदका इति** न्यायपक्षेऽपि न विचार इति बोध्यम् ।

भाष्ये—**वक्ष्यत्येतदिति** । सिद्धत्ववचनं चावश्यकम् । अन्यथा परस्यानुस्वारस्य **वा पदान्तस्येति** परसवर्णे तस्याऽसिद्धत्वात्पूर्वस्यानुस्वारस्य **ययी**त्यस्याऽनापत्तौ रूपाऽसिद्ध्यापत्तेः । तर्हि द्विर्वचनसिद्धिरेव फलमित्याह—**परसवर्णे तर्हीति** । ननु न भेदोऽनुपलब्धेरत आह—**श्रुतिकृत इति** ।

भाष्ये—**यदि नित्यो लोपः स्यादिति** । तदा भेदो न स्यादित्यर्थः । **विभाषा चेति** । **चस्त्वर्थे** ।

एकदेश्याह—**यथाऽभेद इति** । यथा द्विर्वचनप्रवृत्त्यप्रवृत्त्योर्भेदो न भवति तथैवाऽस्तु । **मानुवृत्तद्विभाषाग्रहणमिति** भावः ।

---

† ८ । ४ । ५६; ४७ । ‡ ८ । २ । ६*

+ नित्यो लोपोऽस्त्वित्यर्थः ।

**अनुवर्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वम् ।**

यदयं 'शरोऽचि' [ ८ । ४ । ४९ ] इति द्विर्वचनप्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो 'ऽनुवर्तते विभाषे'ति । कथं कृत्वा ज्ञापकम् ?

**नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित्स्यात् ॥**

यदि नित्यो लोपः स्यात्, प्रतिषेधवचनमनर्थकं स्यात् । अस्त्वत्र द्विर्वचनम्, 'झरो झरि सवर्णे' [ ८ । ४ । ६५ ] इति लोपो भविष्यति, पश्यति त्वाचार्यो 'विभाषा स लोप' इति, ततो द्विर्वचनप्रतिषेधं शास्ति ।

नैतदस्ति ज्ञापकम् । नित्येऽपि तस्य लोपे स प्रतिषेधोऽवश्यं वक्तव्यः । यदेतत् 'अचो रहाभ्याम्' [ ८ । ४ । ४६ ] इति द्विर्वचनम्, लोपापवादः स विज्ञायते । कथम् ? 'यर' इत्युच्यते । एतावन्तश्च यरो यदुत झरो वा यमो वा । यदि चाऽत्र नित्यो लोपः स्याद्द्विर्वचनमनर्थकं स्यात् । किं तर्हि तयोर्योगयोरुदाहरणम् ? यदकृते द्विर्वचने त्रिव्यञ्जनः संयोगः—प्रत्तम्, अवत्तम्, आदित्त्यः । इहेदानीं कर्त्ता हर्त्तेति द्विर्वचनसामर्थ्याल्लोपो न भवत्येवमिहापि लोपो न स्यात्कर्षति वर्षतीति । तस्मान्नित्येऽपि लोपेऽवश्यं स प्रतिषेधो वक्तव्यः ।

तदेतदत्यन्तं सन्दिग्धं वर्त्तते—आचार्याणां, 'विभाषाऽनुवर्त्तते नवे'ति ॥ ५ ॥

---

प्र०—तदेतदिति । ज्ञापकत्वमस्य विघटयति । आचार्योपदेशपारम्पर्यात्त ज्ञायते—अनुवर्त्तते विभाषे'ति । तस्मात्त्रिव्यञ्जनसंयोगश्रवणायाणुदिदिति णकारेण प्रत्याहारः कृतो न चकारेणेति स्थितम् ॥ ५ ॥

---

उ०—तृतीयो ज्ञापकमुपन्यस्यति—**अनुवर्त्तत इत्यादिना** । **झरो झरीति** लोपे इत्यर्थः । मध्यस्थतया **हलो यमामि**त्यस्यापि वैकल्पिकत्वं सिद्धमिति भावः ।

**लोपापवाद इति** । यद्यपि हर्यनुभव इत्यादौ तदुदाहरणे लोपेऽप्राप्तेपि द्विर्वचनमारभ्यते, तथापि कृते द्वित्वे पश्चाल्लोपेऽपि द्विर्वचनं व्यर्थमित्याशयेनाऽपवादत्वोक्तिरिति भावः । **तयोर्योगयोः**—लोपविधायकयोः । **प्रत्तमि**त्यादौ दाधातोः क्ते आतस्तकारोऽच **उपसर्गा**दित्यनेन । **आदित्ये** आदित्याद्भवादर्थण्यन्ताण्ण्यः ।

तद्व्याचष्टे—**ज्ञापकत्वमस्य विघटयतीति** । सर्वथाऽसंभवीत्युपसंहरतीत्यर्थः । ज्ञापकेन तदनुवृत्तिं साधयतस्तत्खण्डनेऽनुवृत्तिः सन्दिग्धैवेति भावः । **लणसूत्रे 'विभाषा स लोप'** इत्युक्तेराह—**आचार्येति** । अणग्रहणाज्ज्ञापकादित्यपि कश्चित् । तत्तु वार्त्तिककृताऽणग्रहणप्रत्याख्यानान्नोक्तम् ॥ ५ ॥

## लण् ॥ ६ ॥

अयं णकारो द्विरनुबध्यते-पूर्वश्चैव परश्च । तत्राऽण्ग्रहणेष्विण्ग्रहणेषु च सन्देहो भवति 'पूर्वेण वा स्युः, परेण वे'ति । कतमस्मिंस्तावदण्ग्रहणे सन्देहः ? 'ढ्लोपे पूर्वस्य दीर्घोऽणः' [ ६ । ३ । १११ ] इति ।

**असन्दिग्धम्**

असन्दिग्धम्—पूर्वेण, न परेण । कुत एतत् ?

**पराऽभावात्,**

नहि ढ्लोपे परेऽणः सन्ति । ननु चायमस्ति—आतृढः, आवृढ इति । एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात् । 'ढ्लोपे पूर्वस्य दीर्घोऽचः' इत्येव ब्रूयात् । अथवैतदपि न ब्रूयात् । अचो ह्येतद्भवति 'ह्रस्वो दीर्घः प्लुत' इति ।

अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः—'केऽणः' [ ७ । ४ । १३ ] इति । असन्दिग्धं पूर्वेण, न परेण । कुत एतत् ? 'पराऽभावात्' । नहि के परेऽणः सन्ति । ननु चायमस्ति—'गोका' 'नौके'ति । एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात् । 'केऽचः' इत्येव ब्रूयात् । अथवैतदपि न ब्रूयात् । अचो ह्येतद्भवति 'ह्रस्वो दीर्घ प्लुत' इति ।

---

**प्र०—लण् । सन्देहो भवतीति** । कि प्रत्यासत्तिराश्रीयतेऽथ व्याप्तिरिति सन्देहः ।

**नहि के पर इति** । नन्वल्पाउपानदुपानत्केति ह्रस्वे कर्तव्ये '**नहो ध**' इत्यस्याऽसिद्धत्वादस्ति के परनो हकार, तथा 'गीष्के'त्यादी रेफः । अत्राहु—**न मु ने** इत्यत्र 'ने'ति योगविभागेन धत्वादीनामसिद्धत्वाभावात् तेपु च कृतेपु हकारादीनामभावः ।

---

उ०—**लण्** । **किमिति** । क प्रत्यासत्तिः, क व्याप्तिरिति सन्देह इत्यर्थः ।

भाष्ये—**कतमस्मिन्निति** । वक्ष्यमाणरीत्या सर्वत्र निर्णायकसत्त्वात्प्रश्नः । **कतरस्मिन्निति** पाठेऽपि डतरादिविधौ उपाधिप्रत्याख्यानान्न दोष इति बोध्यम् । **नहि ढ्लोप इति** । 'वढे'त्यादौ गुणोऽसिद्ध इति भावः । **दीर्घोऽच इत्येवेति** । मात्रालाघवाऽभावेपि सङ्ग्राह्यलाघवायाऽसन्देहाय चेति भावः । भाष्ये **अचो हीति** ।' अचश्चे'ति परिभाषणादिति भावः ।

**तथा गीष्केति** । विसर्गस्याऽसिद्धत्वादिति भावः । **तेषु च कृतेष्विति** । परत्वादिति भावः । योगविभागस्य भाष्याऽनारूढत्वाद्गोकेत्यादिभाष्यात्के **परे** इति भाष्याच्च तेषामनभिधानं वक्तुं युक्तम् ।

**अचो हीति** । 'अचश्चे'ति परिभाषणादिति भावः ।

**अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः—'अणोऽप्रगृह्यस्यानुनासिकः' [ ८ । ४ । ५७ ] इति ।**

**असन्दिग्धं पूर्वेण, न परेण । कुत एतत् ? पराऽभावात् । न हि पदान्ताः परेऽणः सन्ति । ननु चायमस्ति 'कर्तृ हर्तृ' इति । एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादणग्रहणमनर्थकं स्यात् । 'अचोऽप्रगृह्यस्यानुनासिकः' इत्येव ब्रूयात् । अथवैतदपि न ब्रूयात्, अच एव हि प्रगृह्या भवन्ति ।**

---

प्र०—**नहि पदान्ता** इति । ननु च **भोभगो**—इत्यत्राऽश्ग्रहणस्य प्रयोजनं वक्ष्यते—'वृक्षव्करोतीत्यत्र **हलि सर्वेषा**मिति लोपो मा भू'दिति । तत्र वृक्षं वृश्चतीति क्विपि कृते वृक्षवृश्चमाचष्टे इति णिचि टिलोपे च कृते, वृक्षवयतेर्विचि कृते 'वृक्ष'विति भवति । क्विपि तु 'क्वौ लुप्त' 'क्वौ विधिं प्रति च न स्थानिव'दिति निषेधात्संप्रसारणप्रसङ्गो,'लोपो व्योर्वली'ति वलोपप्रसङ्गश्च । विचि तु स्थानिवद्भावाद्धल्निमित्तो वलोपो न भवति । 'हलि सर्वेषा'मित्यनेन तु लोपे क्रियमाणे 'पूर्वत्रासिद्धे न स्थानिव'दिति स्थानिवत्त्वनिषेधाद्वलोपः प्राप्तोऽश्ग्रहणानुवृत्त्या निवर्त्यते । तत्कथमुच्यते—'**न हि पदान्ता**' इति । उच्यते—'अप्रगृह्यस्ये'ति पर्युदासेनाऽच एवानुनासिकेन भाव्यं न तु हल इत्युक्तं—'न हि पदान्ता' इति । कार्यभाज इत्यर्थः ।

**अचोऽप्रगृह्यस्येति** । हलो हि न भाव्यमित्यत्राण्ग्रहणसामर्थ्यात्पूर्वणेति स्थितम् ।

---

उ०—**नहि पदान्ता इति** । पदानामेवाऽनुनासिकोऽवसाने जायत इत्याश्रित्येदमुक्तम् । न तु तत्र पदान्ताधिकारोऽस्ति । **लोप इति** । अशा हलां विशेषणादिति भावः । **निषेधात्संप्रसारणप्रसङ्ग इति** । चिन्त्यमिदम् । णौ परतस्तत्प्रकृतिभूतप्रातिपदिकस्य टिलोपविधानेन वृश्चनः स्थानित्वे मानाभावेन, वकारे एकदेशविकृतन्याये वृश्चतित्वस्य दुर्लभत्वात् । अर्धाधिकविकारेण प्रत्यभिज्ञाऽभावाच्च । अत एव 'राजकीय'—मित्यादौ अल्लोपो न । वृश्च एव टिलोपस्थानित्वे तु प्रकृतिभावापत्तिः । एतेन विचि एकदेशविकृतन्यायेन वृश्चतित्वात्षत्वापत्तिः । न च णिलोपस्य स्थानिवत्त्वान्न षत्वम्, 'पूर्वत्रासिद्धीये तन्निषेधा'दिति परास्तम् । न च व्रश्चेति सूत्रे पदाधिकारेण व्रश्चान्तत्वमेकदेशविकृतन्यायेन सुलभमिति वाच्यम्, स्कोरिति सूत्रादन्तो ग्रहणमनुवर्त्य वैयधिकरण्येनैवान्वयाश्रयणेनाऽदोषात् । अत एवाऽन्तग्रहणं चरितार्थम् । अर्धाधिकविकाराच्च । एवं च वृक्षभृज्जो णिजन्तात्क्विपि 'वृक्षभ्' इत्यादौ षत्वं नेत्याहुः । **वलोपप्रसङ्गश्चेति** । इदमुपलक्षणं क्वौ विधौ स्थानिवत्त्वनिषेधादूठ्प्रसङ्गश्चेत्यपि बोध्यम् । **पर्युदासेनेति** । क्रियमाणेऽप्यण्ग्रहणे इत्यर्थः । भाष्येपि न सत्त्वं निषिध्यते किं तु कार्यित्वमेवेत्याह—**कार्यभाज इति** । एवंचानुनासिकप्राप्तियोग्याः पदान्ता न सन्तीत्यर्थः । वस्तुतोऽस्या अग्रे सिद्धान्त्युक्तित्वेन तदशनेनैव पूर्वपक्षस्यौचित्येनैवं भाष्यव्याख्यानमनुचितं, पूर्वपक्षस्य सन्देहस्य चानुत्थानात् । तस्मादष्टमाध्यायस्थं भाष्यमेकदेश्युक्तिरित्येवोचितम् । व्याख्यातं च तत्रोपाध्यायैरित्थमेव ।

अस्मिंस्तर्हि णग्रहणे सन्देहः—'उरण्रपरः' [ १ । १ । ५१ ] इति। असन्दिग्धं पूर्वेण, न परेण । कुत एतत् ? पराभावात् । न ह्युः स्थाने परेऽणः सन्ति । ननु चायमस्ति 'कर्त्र्यर्थम्, 'हर्त्र्यर्थ'मिति । किं च स्याद्यद्यत्र रपरत्वं स्यात् ? द्वयो रेफयोः श्रवणं प्रसज्येत । 'हलो यमां यमि लोपः' [ ८ । ४ । ६४ ] इत्येवमेकस्याऽत्र लोपो भविष्यतीति । विभाषा स लोपः, विभाषा श्रवणं प्रसज्येत । अयं तर्हि नित्यो लोपः, 'रोरि' [ ८ । ३ । १४ ] इति । 'पदान्तस्ये'त्येवं सः । न शक्यः स 'पदान्तस्ये'त्येवं विज्ञातुम् । इह हि लोपो न स्यात्, जर्गृधेर्लङ् अजर्घाः, पास्पर्द्धेः—अपास्पा इति । इह तर्हि—मातॄणां पितॄणामिति रपरत्वं प्रसज्येत । आचार्यप्रवृत्तिर्ज्ञापयति-'नाऽत्र रपरत्वं भवती'ति यदयम्—'ॠत इद्धातोः' [ ७ । १ । १०० ] इति धातुग्रहणं करोति । कथं कृत्वा ज्ञापकम् ? धातुग्रहणस्यैतत्प्रयोजनम् । इह मा भूत्— मातॄणां पितॄणामिति । यदि चात्र रपरत्वं स्याद्धातुग्रहणमनर्थकं स्यात् । रपरत्वे कृतेऽनन्त्यत्वादित्त्वं न भविष्यति । पश्यति त्वाचार्यो—'नात्र रपरत्वं भवती'ति ततो धातुग्रहणं करोति । इहापि तर्हि† न प्राप्नोति—'चिकीर्षति जिहीर्षती'ति । मा भूदेवम् । 'उपधायाश्च' [ ७ । १ । १०१ ] इत्येवं भविष्यति । इहापि तर्हि प्राप्नोति—'मातॄणां पितॄणा'मिति । तस्मात्तत्र‡ धातुग्रहणं कर्त्तव्यम् । एवं तर्हि साम-

प्र०—**अजर्घा इति** । गृधेर्यङ्लुकि रुगागमेऽभ्यासस्य कृते, लङि सिपि शब्लुकि गुणरपरत्वसिल्लोपभष्भावजश्त्वरुत्वरलोपदीर्घत्वेषु रूपम् ।

**इहापि तर्हीति** । धातुग्रहणेन हि लिङ्गेनाऽधातोरेव रपरत्वं निवर्तितम् । धातोस्तु रपरत्वे सत्यनन्त्यत्वान्न प्राप्नोतीति प्रश्नः ।

**इहापीति** । तस्माद्धातुग्रहणस्य सप्रयोजनत्वान्न ज्ञापकत्वमित्यर्थः ।

उ०—भाष्ये—**रोरीति** । त्रिपाद्या बहिरङ्गाऽसिद्धत्वाऽभावादिति भाव ।

**भष्भावः** । **एकाचो बशो भषि**त्यनेन । तत्र **एकाच** इति, **झषन्तस्येति** च 'धातो'रित्यपेक्षया व्यधिकरणषष्ठीति भावः । **रुत्वम्**—'दश्चे'त्यनेन ।

भाष्ये '**इहापि तर्हि**' इत्यस्य—'ॠत इत्त्व'मिति शेषः । ननु धातुग्रहणेन ॠकारस्य दीर्घो न रपर इति ज्ञापनादज्झनेति दीर्घस्याप्यरपरत्वात्कथमत्रेत्त्वाऽप्राप्तिरत आह—**धातुग्रहणेनेति** ।

भाष्ये—**तस्मात्तत्रेति** । न च **इह किंचित्क्रियते** इतीति न्यायेन ज्ञापकत्वमप्यस्त्विति वाच्यम्, गॄइत्यादेरनुकरणे **प्रकृतिवदनुकरण**मित्यस्याभावे '**प्रोयकी**'त्यादावित्त्वाभावार्थमिहापि तदावश्यकत्वात् । गत्यन्तराभावे एव तन्न्यायेन ज्ञापकत्वाश्रयणाच्च । तदाह—**तस्मादिति** । एवंच रपरत्वेऽपि मातॄणामित्यादौ उप**धायाश्चे**तीत्त्ववारणेन धातुग्रहणस्य चारितार्थ्येन रपरत्वनिवृत्तौ न ज्ञापकतेत्यर्थः ।

† 'इत्त्व'मिति क्वचिदधिकः पाठः ।

‡ ॠत इद्धातोः [ ७ । १ । १०० ] इत्यत्र । तेन उपधायाश्च [ ७ । १ । १०१ ] सूत्रे धातुपदानुवर्तनान्मातॄणामित्यादावित्त्वं न भविष्यति । तस्मात् सप्रयोजनत्वाद् धातुग्रहणं न ज्ञापकम् ।

र्थ्यात्पूर्वेण, न परेण। यदि परेण स्यादणग्रहणमनर्थकं स्यात् 'उरन्परः' इत्येव ब्रूयात् ।

अस्मिंस्तर्ह्यणग्रहणे सन्देहः—'अणुदित्सवर्णस्य चाप्रत्ययः' [ १ । १ । ६९ ] इति । असन्दिग्धं परेण, न पूर्वेण । कुत एतत् ?

**सवर्णेऽण्, तपरं ह्युर्ॠत् ।**

यदयम् 'उर्ॠत्' [ ७ । ४ । ७ ] इत्यृकारं तपरं करोति, तज्ज्ञापयत्याचार्यः 'परेण, न पूर्वेणे'ति ।

इणग्रहणेषु तर्हि सन्देहः । 'असन्दिग्धं परेण, न पूर्वेणेति । कुत एतत् ?

**य्वोरेन्यत्र परेणेण्स्यात् ।**

यत्रेच्छति पूर्वेण, संमृद्य ग्रहणं तत्र करोति 'य्वो'रिति । तच्च गुरु भवति+ । कथं कृत्वा ज्ञापकम् ? तत्र विभक्तिनिर्देशे संमृद्यग्रहणे चार्द्धचतस्रो मात्राः, प्रत्याहार-ग्रहणे पुनस्तिस्रो मात्राः, सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः 'परेण न पूर्वेणे'ति ।

---

प्र०—**सवर्णे इति** । 'अचीकृत'दिति ॠकारस्य ऋकार एव यथा स्यात्, ॠकारो मा भूदित्येवमर्थं तपरत्वं क्रियते । यदि च पूर्वेण णकारेणाऽण्ग्रहणं स्यादृकारोऽनण्त्वाद्भिन्नकालस्य ग्राहक एव न भवतीति ॠकारो न च स्थानी, नाप्यादेशः प्रसजतीति, किं तपरत्वेन । कृतं च तज्ज्ञापकं परेणाऽण्ग्रहणस्य ।

**अर्धचतस्र इति** । अर्धेन चतस्रः । चतुर्थी हि मात्रा तत्राऽर्द्धमिति ।

---

उ०—भाष्ये—**सामर्थ्यात्पूर्वेणेति** । न च 'गम्ले'त्यादौ यणादेशे लपरत्वार्थमेव परेणाऽण्ग्रहणं स्यादिति सामर्थ्यं कथम् । ऋकारांशे हल्रूपाऽणि रो रीति प्रवृत्त्या फलाऽभावेन तत्साहचर्याद्लृकारांशेपि हल्रूपाऽणि अप्रवृत्तिरित्याशयात् । रलयोः समानश्रुतित्वेन तत्रापि रोरीत्यस्य प्रवृत्तेरित्यन्ये । लृकारे यणघटितप्रयोगानभिधानमेवैतद्भाष्यप्रामाण्यादित्यन्ये ।

भाष्ये—**सवर्णेणतपरमिति** । यदुर्ॠत्सूत्रे तपरं करोति तज्ज्ञापकं सवर्णेऽण्ग्रहणं परणकारकमिति वार्तिकाक्षरार्थः **इत्येवमर्थमिति** । ह्रस्वो यथा स्याद्दीर्घो माभूदित्येवमर्थमित्यर्थः । **ॠकार इति** । उद्देश्यसमर्पक इत्यर्थः । न च भाव्यमानत्वेन सवर्णग्रहणाऽप्रसक्तेस्तद्वैयर्थ्यम्, तपरत्वाऽभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थत्वेनाऽपूर्वबोध्यत्वाऽभावेन च्वाऽविधेयत्वात् । कृते तु तपरत्वे भाव्यमानताऽपीत्यन्यत् ।

भाष्ये—**संमृद्येति** । आदेशेन तौ निवर्त्येत्यर्थः । 'अर्धचतुर्था'इति वक्तुमुचितमत आह—**अर्धे-नेति** । भाष्ये—**तिस्रो मात्रा इति** । 'इणः' इति पदच्छेदाभिप्रायेणेदम् । तदुक्तम्—**विभक्तिनिर्देशे इति** । संहितायां तु सार्धमात्राद्वयमेवेति बोध्यम् ।

---

+ अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ।

किं पुनर्वर्णोत्सत्ताविवाऽयं णकारो द्विरनुबध्यते ?

व्याख्यानाच्च द्विरुक्तितः ॥

एतज्ज्ञापयत्याचार्यो'[1]—भवत्येषा परिभाषा—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति । 'अणुदित्सवर्णस्ये'त्येतत्परिहाय पूर्वेणाऽणग्रहणम्†, परेणेणग्रहण'मिति व्याख्यास्यामः‡ ॥ ६ ॥

[ असंदिग्धम् पराऽभावात् सवर्णेऽण् तपरं ह्युऋृत् ।
य्वोरन्यत्र परेणेण् स्याद् व्याख्यानाच्चद्विरुक्तितः ॥× ]

## अमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥

किमर्थमिमौ मुखनासिकावचनावुभावनुबध्येते, न ञकार एवानुबध्येत ? कथं—यानि मकारेण ग्रहणानि ? सन्तु ञकारेण । कथं 'हलो यमां यमि लोपः' [ ८ । ४ । ६४ ] इति ? अस्तु ञकारेण—'हलो यञां यञि लोपः'इति । नैवं शक्यम् । झकारभकारपरयोरपि झकारभकारयोर्लोपः प्रसज्येत । न झकारभकारौ झकारभकारयोःस्तः ।

---

प्र०—किं पुनरिति । वर्णोत्सत्तिः—वर्णोच्छेदः । वर्णान्तरमनुबन्धः किं न क्रियते इत्यर्थः ।

व्याख्यानत इति । न्यायादागमाद्वा शब्दशक्तिरनुसरणीयेत्यर्थः ॥ ६ ॥

---

उ०—अणादिग्रहणेषूक्तैर्महद्भिर्यत्नैः सन्देहपरिहारे प्रतिपत्तिगौरवमिति लाघवाय वर्णान्तरमेव किं नानुबध्यत इत्याशयेनाह—भाष्ये—किंपुनरिति ।

एतत्—वक्ष्यमाणम् । आचार्यः[1]—शिवः । ननु ज्ञापितंपि प्रवर्तकतया निवर्त्तकतया वा नास्य चरितार्थ्यमत आह—न्यायादिति । उक्तो न्यायः । आगमः—उपदेशपरम्परा । तत्सिद्ध एवायमर्थो णकारानुबन्धनरूपस्वव्यवहारेण बोध्यत इत्यर्थः । एवंच्चव्याख्यानेनैव—पूर्वणकारेण केचित्, केचित्परणकारेणेति निर्णये ज्ञापकानुसरणक्लेशो वृथेति सूचितम् ।

अमङणनम् । झभञ् । भाष्ये—न झकारेत्यादि । अञ्ञहितहल्मात्रानुकरणं तु सूत्रादन्यत्र नास्तीति हयवरट्सूत्रे प्रपञ्चितम् ।

---

१ पाणिनिः ।

† परेणैवेण्ग्रहाः सर्वे पूर्वेणैवाण्ग्रहा मताः ।
ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ॥

‡ इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रनिबन्धनेनाचार्याणामभिप्रायो लक्ष्यते । [ न मु ने ८ । २ । ३ भाष्ये ]

× मुद्रितग्रन्थेष्वनुपलब्धमपीदं श्लोकवार्तिकं भाष्यशैलीमनुसृत्येह संगृहीतम् ।

कथं 'पुमः खय्यम्परे' [ ८ । ३ । ६ ] इति ? एतदप्यस्तु ञकारेण—'पुमः खय्यञ्परे'इति । नैवं शक्यम् । झकारभकारपरेऽपि हि खयि रुः प्रसज्येत । न झकारभकारपरः खयस्ति ।

कथं—'ङमो ह्रस्वादचि ङमुण्नित्यम्' [ ८ । ३ । ३२ ] इति ? एतदप्यस्तु ञकारेण—'ङञो ह्रस्वादचि ङञुण्नित्य'मिति । नैवं शक्यम् । झकारभकारयोरपि हि पदान्तयोर्झकारभकारावागमौ स्याताम् । न झकारभकारौ पदान्तौ स्तः । एवमपि पञ्चागमास्त्रय आगमिनो वैषम्यात्सङ्ख्यातानुदेशो† न प्राप्नोति । सन्तु तावद्येषामागमानामागमिनः सन्ति । झकारभकारौ पदान्तौ न स्त इति कृत्वा आगमावपि न भविष्यतः‡ ।

---

प्र०—झभञ् । न झकारेति । झकारस्य भकारस्य च पदान्तस्य जश्त्वेन भाव्यमिति तस्याऽभावः । उज्झेर्झकारः संयोगान्तस्येति लुप्यते इति तस्याऽप्यभावः ।

सन्तु तावदिति । उद्देशानुदेशाभ्यां सङ्ख्यासाम्याद्यथासङ्ख्ये लब्धे प्रयोगे यस्यागमस्यागमी विद्यते स प्रवर्तते नान्य इत्यर्थः ।

---

उ०—झकारभकारयोरपि हि पदान्तयोरिति । पदान्तयोस्तयोः सतोस्ततः परस्याऽजादेः पदस्य झभौ स्यातामित्यर्थः ।

एवमपि पञ्चागमा इति । लक्ष्यसंस्कारकालिकं सङ्ख्यासाम्यं यथासङ्ख्यसूत्रप्रवृत्तौ निमित्तमिति मन्यते ।

सिद्धान्ती तु प्रतिपत्तिकालिकमेव सङ्ख्यासाम्यं तत्प्रवृत्तौ निमित्तमित्याह—सन्त्विति । येषामागमानामागमिनः सन्ति ते भवन्तु इत्यर्थः । अनुदेशः—प्रतिनिर्देशः । भगवता तु स्पष्टप्रतिपत्तयेऽनुबन्धद्वयमदर्शि ।

---

† १ । ३ । १० ।

‡ एवं च मकारानुबन्धो भाष्ये प्रत्याख्यातः । मकारेण 'अम् यम् ङम्'इति त्रयः प्रत्याहारास्ते ञकारेण कार्याः 'अञ् यञ् ङञ्'इति । एवं च क्रियमाणे 'पुमः खय्यञ्परे' इत्येव सूत्रमस्तु । न हि झकारभकारपरः खयस्ति येनातिप्रसङ्गः स्यात् । 'हलो यमां यमि लोपः'इति सूत्रे न झकारभकारौ झकारभकारपरौ स्तः, हल उत्तरयोस्तु तयोः सम्भवे 'झरो झरी'ति लोपो भविष्यति । 'ङञो ह्रस्वादचि ङञुण् नित्यम्' इति पाठेऽपि पूर्ववद् दोषाऽभावः । आगमागमिनोः संख्यातानुदेशेऽपि न दोषो 'यथासंख्यमि' त्यत्र विधिकाल एव निर्दिश्यमानगतसंख्यासाम्याश्रयणात् ।
पाणिनिना तु स्पष्टप्रतिपत्त्यर्थमनुबन्धद्वयमकारि ।

**अथ किमिदमक्षरमिति ?**

**'अक्षरं न क्षरं विद्यात्'**

**न क्षीयते न क्षरतीति वाऽक्षरम् ।**

**'अश्नोतेर्वा सरोऽक्षरम्' ।**

**अश्नोतेर्वा पुनरयमौणादिकः 'सरन्'प्रत्ययः । अश्नुत इत्यक्षरम् ।**

**'वर्णं वाऽऽहुः पूर्वसूत्रे'**

**अथवा पूर्वसूत्रे† वर्णस्याक्षरमिति संज्ञा क्रियते ।**

---

प्र०—**किमिदमिति** । अक्षरसमाम्नाय इति व्यवहाराद्यो वा इमां स्वरशोऽक्षरश इति चोक्तत्वात्प्रश्नः ।

**अक्षरं न क्षरमिति** । क्रियाशब्दोऽयं नित्यस्यार्थस्य वाचक इति दर्शयति । अत्र क्षियः क्षरतेर्वा विनाशार्थस्य नञ्पूर्वस्य रूपम् । तच्च ब्रह्मतत्त्वं परमार्थतो नित्यम् । व्यवहारनित्यतया तु वर्णपदवाक्यस्फोटानां जातिस्फोटस्य वा ।

**अश्नोतेर्वेति** । सरन्प्रत्ययस्यानुबन्धलोपे कृतेऽनुकरणं 'सर' इति । तत्राऽर्थमश्नुते व्याप्नोतीत्यक्षरं,—पदं वाक्यं वा ।

**वर्णं वाहुरिति** । रूढिरियं वर्णस्येत्यर्थः । **पूर्वसूत्रे इति** । व्याकरणान्तरे 'वर्णा अक्षराणी'ति वचनात् ।

---

उ०—**इति व्यवहारादिति** । **अइउणसूत्रे**ऽयं व्यवहारो भाष्ये । **प्रश्न इति** तद्घटकीभूताक्षरपदार्थावगमायेति भावः ।

भाष्ये—**अक्षरमित्यस्य**—न क्षरमिति विग्रहप्रदर्शनम् । **तच्चेति** अक्षरं चेत्यर्थः । **ब्रह्मतत्त्वस्यैव** तत्त्वे हेतुगर्भविशेषणमाह—**परमार्थतो नित्यमिति** । यतस्तत्प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वरूपनित्यत्ववदित्यर्थः । नन्वेवं प्रकृते किमायातमत आह—**व्यवहारनित्यतया चेति** । सर्वेषां शब्दानामाकाशादिवत् सृष्ट्यादावुत्पत्तिः प्रलये च नाश इत्यर्थः । एवं च व्यवहारनित्यतयाऽक्षरब्रह्मसादृश्यवतां तेषां पदादिरूपाणामयं वर्णसमाम्नायः शास्त्रप्रवृत्तिद्वारा बोधक इत्यक्षरसमाम्नाय इति चतुर्दशसूत्रीविषयव्यवहारोपपत्तिः । एवं च शब्दे औपचारिकोऽक्षरपदप्रयोग इति भावः । न्यायादिनयेऽप्याह—**जातिस्फोटस्य वेति** ।

भाष्ये—**अश्नोतेर्वेति** । तद्व्याचष्टे—**अर्थमश्नुते इति** । वर्णानामनर्थकत्वेन चिन्त्यमिदम् । नानादेशेषु युगपदेकस्यैव शब्दस्याभिव्यक्तिदर्शनेन स्फोटस्यापि व्यापकत्वमिति भाष्यार्थ **इत्यन्ये** ।

ननु न्यायादिनयेऽव्याप्यवृत्तिषु विनाशिषु वर्णेषु कथं तद्व्यवहारोऽत आह—**वर्णं वाहुरिति** । 'च'घटितः पाठोऽत्र प्रामादिकः । व्याख्यानभाष्ये **अथवेत्युक्तेः** । नन्वनन्तरोक्तयोगाभावात्कथं तेषु प्रयोगोऽत आह—**रूढिरिति** । तदुक्तं भाष्ये—**अक्षरमिति संज्ञेति** । **व्याकरणान्तरे इति** । पूर्वसूत्रशब्दे षष्ठीतत्पुरुष इति भावः । एवं **चाक्षरसमाम्नाय** इत्यस्य श्रुतिरूपो वर्णसङ्घात इत्यत्र तात्पर्यम् ।

---

† 'पूर्वसूत्रे = व्याकरणान्तरे 'वर्णा अक्षराणी'ति वचना'दिति कैयटः ।

'एवं ह्यन्ये पठन्ति—'वर्णा अक्षराणि'इति महाभाष्यदीपिकायां भर्तृहरिः ।

भाष्ये 'पूर्वसूत्र' शब्दोऽनेकस्थलेषु दृश्यते । तद्यथा—

## 'किमर्थमुपादिश्यते'

**अथ किमर्थमुपदेशः क्रियते ?**

**वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते ।**
**तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते ॥**

**सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो**

---

प्र०—**किमर्थमिति**। वर्णानां साधुत्वस्याऽप्रतिपाद्यत्वात्पदस्यैव साधुत्वान्वाख्यानात्प्रश्नः।

**वर्णज्ञानमिति**। वर्णा येन शास्त्रेण ज्ञायन्ते तद्वाचो विषयः। शास्त्रेण वाग्विसीयते आबध्यते, शास्त्रेण तस्याः परिज्ञानादित्यर्थः **यत्र चेति**। ब्रह्म वेदः पदे वर्तते। तस्य च शास्त्रं विषयः, लौकिकानां वैदिकानां च शास्त्रं विषय इत्यर्थः। **तदर्थमिति**। शास्त्रप्रवृत्त्यर्थमित्यर्थः। **इष्टबुद्ध्यर्थमिति**। कलादिदोषरहितवर्णज्ञानार्थमित्यर्थः। **लघ्वर्थमिति**। अनुबन्धकरणार्थ-

---

उ०—भाष्ये—**उपदिश्यत इति**। अक्षरसमाम्नायोपदेशः किमर्थ इत्यर्थः। पूर्वं कृतोऽप्ययं विचारः कंचिद्विशेषं वक्तुं पुनः क्रियते।

**येन शास्त्रेणेति**। चतुर्दशसूत्र्यात्मकेन, तन्मूलकपाणिनिव्याकरणेन चेत्यर्थः। **तत्—शास्त्रम्**। **वाचो विषयः**—बन्धनं, प्रतिपादकमित्यर्थः। भाष्ये—**'यत्रचे'**त्यनेन वाक्परामृश्यते इत्याह—**पदे वर्तत** इत्यादिना। **शास्त्रं विषय इति**। प्रतिपादकमित्यर्थः। 'वर्णज्ञानं शास्त्रं—वाचो विषयः। का सा वाग् ? **यत्र ब्रह्म च वर्तते**। चात्पुराणादी'ति भाष्याक्षरार्थः। तदर्थमित्येतद्व्याचष्टे—**शास्त्रप्रवृत्त्यर्थमिति**। **कलादीति**। इदं प्रयोजनं पस्पशान्ते दूषितम्। **अनुबन्धकरणार्थमिति**। **'लघ्वर्थ'**मित्यक्षराणामत्रार्थे स्वारस्यं चिन्त्यम्। अनुबन्धकरणमूलकप्रत्याहारद्वारा लाघवेनशास्त्रप्रवृत्त्यर्थमित्यर्थो वा। **वाक्समाम्नायः**। वाक्सङ्ग्रहोपाय इत्यर्थः। तदाह—**एतावद्भिरेवेति**। दृष्टफलेनाभ्युदयेन वा **पुष्पितः**। अदृष्टफलेन निःश्रेयसेन वा **फलितः**। **वाग्व्यवहारस्येति**। तत्सङ्ग्राहकस्य चतुर्दशसूत्रीरूपस्येत्यर्थः। यथाश्रुते हि भाष्येऽक्षरसमाम्नायोद्देशेन प्रवृत्तविशेषणानामन्यपरतया योजने भाष्यविरोधः। अत एवैतत्प्रतीकमुपादाय **हरिणा**—'**अस्याक्षरसमाम्ना-**

---

(क) 'पूर्वसूत्रे गोत्रस्य वृद्धमिति सञ्ज्ञा क्रियते।' [ १ । २ । ६८ ]

(ख) पूर्वसूत्रनिर्देशो वापिशलमधीत इति ॥ ३ ॥
पूर्वसूत्रनिर्देशो वा पुनरयं द्रष्टव्यः। पूर्वसूत्रेऽप्रधानस्योपसर्जनमिति सञ्ज्ञा क्रियते। [ ४ । १ । १४ ]
"पूर्वसूत्रशब्देन पूर्वाचार्यकृतं व्याकरणमुच्यते" इति कैयटः।

(ग) पूर्वसूत्रनिर्देशश्च। चित्वान् चित इति। [ ६ । १ । १६३ ]

(घ) पूर्वसूत्रनिर्देशोऽयं पूर्वसूत्रेषु च येऽनुबन्धा न तैरिहेत्कार्याणि क्रियन्ते।……निर्देशोऽयं पूर्वसूत्रेण वा स्यात्। [ ७ । १ । १८ ]

(ङ) अञ्चशब्दात् प्रथमा पूर्वसूत्रनिर्देशश्च। [ ८ । ४ । ७ ] 'पूर्वाचार्याः कार्यभाजः षष्ठ्या न निरदिक्ष'न्निति इति कैयटः।

केन तर्हि ? भवतिना । न भवति नपुंसकस्येति ।

यत्तावदुच्यते 'शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शिप्रतिषेधः' इति ।

नाऽप्रतिषेधात् ॥ २ ॥*

नायं प्रसज्यप्रतिषेधो—नपुंसकस्य नेति । किं तर्हि ? पर्युदासोऽयं—यदन्यन्नपुंसकादिति । नपुंसके न व्यापारः । यदि केनचित्प्राप्नोति, तेन भविष्यति । पूर्वेण च प्राप्नोति ।

अप्राप्तेर्वा ॥ ३ ॥*

अथवा अनन्तरा या प्राप्तिः सा निषिध्यते । कुत एतत् ? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति । ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् ।

यदप्युच्यते—'असमर्थसमासश्चायं द्रष्टव्यः' इति । यद्यपि वक्तव्योऽथवैतर्हि

---

प्र०—अप्राप्तेर्वेति । प्रसज्यप्रतिषेधेऽप्यदोषः । तत्र 'सु'डित्यनेन या प्राप्ति, सा निषिध्यते । न तु 'शि सर्वनामस्थान'मिति प्राप्तिः । अन्यथा शि'सर्वनामस्थान'मिति निरवकाशं स्यात् । नपुंसकस्यैव हि शिः संभवति ।

ननु चेयमिति । परत्वादित्यर्थः । प्रतिषेधयुक्ताऽयुक्तत्वाच्च विरोधसद्भावः । तत्र परत्वात् सुडिति प्राप्ति पूर्वां प्राप्ति बाधते तामपि प्रतिषेध इति दोषः ।

नोत्सहत इति । अपवादविषयपरिहारेणाऽस्याः प्रवर्तनादित्यर्थः ।

अथवैतर्हीति । इदानीमित्यर्थः । तत्र 'स्त्रीपुंसयो'रिति वक्तव्ये 'अनपुंसकस्ये'ति वचनं

---

उ०—दोषद्वययुक्तप्रसज्यप्रतिषेधापेक्षया लघुरेवेति भावः । वस्तुतो नञो निपातत्वेनाऽनेकार्थत्वात्पर्युदासपक्षे लक्षणेति रिक्तं वचः । पर्युदासपक्षे सुडित्यनेनैकवाक्यतया तस्याऽप्राप्तावपि अन्यस्याऽप्राप्तौ न मानमिति तात्पर्यम् ।

नपुंसके न व्यापार इति । निषेधस्येतिशेषः ।

अप्राप्तेरितिवार्त्तिकस्य पूर्वसूत्रविहितसंज्ञायाः प्रतिषेधाऽप्राप्तेरिति अक्षरार्थः । भाष्ये तु वस्त्वर्थं उच्यते । अन्यथेति । सुडित्यनपेक्ष्य नपुंसकसम्बन्धिमात्रस्य निषेध इत्यभिमानः । सुट्संसम्बन्धे तु इदं चिन्त्यं, शसः शौ चरितार्थत्वात् ।

ननु संज्ञाया एकत्वेन कार्यैक्ये विरोधाऽभावात्कथ परत्वमत आह—प्रतिषेधेति । शसि सावकाशत्वात् । एवं चोभयोर्यौगपद्याऽसंभवरूपो विरोधोऽस्तीति भावः । पूर्वां प्राप्तिमिति । एवं च सकृद्गतिन्यायेन पुनर्न प्रवर्त्तत इति भावः ।

अपवादेति । एवं च स्वयमप्रवर्त्तमाना कथमन्यबाधिकेति तन्न्यायावसरो नेति भावः ।

इदानीमित्यर्थ इति । तथापीत्यर्थ इत्युचितम् । 'यद्यपि वक्तव्य' इत्युपक्रमात् । स्त्रीपुंसयोरिति ।

---

* भाष्यमिदमिति केचित् ।

बहूनि प्रयोजनानि । कानि ? असूर्यंपश्यानि मुखानि, अपुनर्गेयाः श्लोकाः, अश्राद्धभोजी ब्राह्मण इति ॥ ४३ ॥

## नवेति विभाषा ॥ १ । १ । ४४ ॥

### नवेति विभाषायामर्थसंज्ञाकरणम् ॥ १ ॥

नवेति विभाषायामर्थस्य संज्ञा कर्तव्या । नवाशब्दस्य योऽर्थस्तस्य संज्ञा भवतीति वक्तव्यम् । किं प्रयोजनम् ?

### शब्दसंज्ञायां ह्यर्थाऽसंप्रत्ययो यथाऽन्यत्र ॥ २ ॥

शब्दसंज्ञायां हि सत्यामर्थस्याऽसंप्रत्ययः स्यात्, 'यथान्यत्र' । अन्यत्रापि शब्दसंज्ञायां शब्दस्य संप्रत्ययो भवति, नार्थस्य । क्वान्यत्र ? 'दाधा घ्वदाप्'

---

प्र०—ज्ञापकम्—'प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्ती'ति ॥ ४३ ॥

**नवेति । नवेति विभाषायामिति** । समुदायस्यानुकरणत्वादनुकरणस्यानुकार्येण चाऽर्थवत्त्वात्प्रातिपदिकत्वे सति विभक्त्युत्पत्तिः । स्त्रीप्रत्यये च तदादिनियमाऽभावाद्याडामौ भवत । अथवा नवेत्युच्चार्य या विभाषा कृता तस्या मिति व्याख्या । तत्र लोके क्रियापदसन्निधाने नञ्‌शब्दयोर्योऽर्थो द्योत्यो विकल्पप्रतिषेधलक्षण स संज्ञीत्यर्थः । अन्यथा विभाषाप्रदेशेषु नवाशब्दाविवादेशौ स्याताम् ।

**घुग्रहणेष्विति** । शब्दस्य संज्ञाकरणात्प्रदेशेषु तस्यैव सप्रत्यय इत्यर्थः ।

---

उ०—मात्राधिक्येऽपि स्पष्टप्रतिपत्त्यर्थमित्यर्थः । 'पुंस्त्रियो'रिति तु वक्तुमशक्यम्, तस्याऽसाधुत्वादिति बोध्यम् । अत्र पर्युदासप्रसज्यप्रतिषेधयोः समफलत्वोक्त्या शास्त्रप्रापितस्य प्रतिषेधे विकल्प' इति मीमांसकोक्तं चिन्त्यम् । सामान्यविशेषन्यायेन बाधस्यैवौचित्यात् । स्वाऽभावे संभावितस्यैव च प्रतिषेध इत्यादि मञ्जूषायां विस्तरः ॥४३॥

**नवेति विभाषा** । ननु समुदायस्य समासग्रहणनियमेनाऽप्रातिपदिकत्वात् । 'नवेतिविभाषाया'मित्यनुपपन्नमत आह—**समुदायस्येति** । वार्तिकोच्चारितसमुदायस्येत्यर्थः । नन्वेवमपि समुदायस्यानाऽबन्तत्वात् कथं याडादीत्यत आह—**स्त्रीप्रत्यये चेति** । 'स्त्रीप्रत्यये चानुपसर्जने ने'ति 'ष्यङः संप्रसारण'मित्यत्र भाष्यपठितवचनेनेति भावः । यत्तु हल्ङ्याब्भ्य इति दीर्घग्रहणादिति । तन्न । बहुश्रेयसीत्यादौ लोपार्थं 'प्रत्ययग्रहण' इति तदन्तविधिना ङ्यन्तेत्यर्थे तस्य स्वादिप्रत्ययलब्धयस्माद्विधिस्तदादेरित्येतद्विशेषणतया ङ्यन्तान्तेत्यर्थेन निष्कौशाम्बिव्यावृत्तये दीर्घग्रहणस्यावश्यकत्वादिति दिक् । अनुकरणस्याबन्तत्वं तु प्रकृतिवदनुकरणमिति न्यायात् । तस्याऽनित्यत्वाच्च न प्रत्ययान्तत्वप्रयुक्तप्रातिपदिकत्वनिषेध इति बोध्यम् । **अथवेति** । **कृता** उच्चारिता । समासत्वादेव प्रातिपदिकत्वम्, असमासेऽपि लिङ्गविशिष्टपरिभाषया विभक्तिरिति भावः । नामपदसन्निधाने 'नवा शाटी'त्यादौ प्रत्ययार्थावगतेराह—**क्रियापदेति** । **अन्यथेति** । प्रकरणादिवशाच्चार्थविशेषावसाय इति भाव ।

ननु दाधा ध्वित्यादौ न घुशब्दादिना दाधादीनां प्रत्ययः, किंतु दाधाशब्दैरेवेत्यत आह—**प्रदेशे**-

[ १ । १ । २० ] 'तरप्तमपौ घः' [ २२ ] इति घुग्रहणेषु घग्रहणेषु च शब्दस्य संप्रत्ययो भवति, नार्थस्य ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।

**इतिकरणोऽर्थनिर्देशार्थः ॥ ३ ॥**

इतिकरणः क्रियते सोऽर्थनिर्देशार्थो भविष्यति । किं गतमेतदितिना, आहोस्विच्छब्दाधिक्यार्थाधिक्यम् ? गतमित्याह । कुतः ? लोकतः । तद्यथा—लोके 'गौरित्ययमाहे'ति गोशब्दादितिकरणः परः प्रयुज्यमानो गोशब्दं स्वस्मात्पदार्थात्प्रच्यावयति । सोऽसौ स्वस्मात्पदार्थात्प्रच्युतो याऽसावर्थपदार्थकता तस्याः शब्दपदार्थकः संपद्यते । एवमिहाऽपि नवाशब्दादितिकरणः परः प्रयुज्यमानो नवाशब्दं स्वस्मात्पदार्थात्प्रच्यावयति । सोऽसौ स्वस्मात्पदार्थात्प्रच्युतो यासौ शब्दपदार्थकता तस्या लौकिकमर्थं संप्रत्याययति, नवेति यद्गम्यते नवेतियत्प्रतीयत इति ।

---

प्र०—**इतिकरण इति** । क्रियत इति करणः । कर्मणि ल्युट् । इतिश्चासौ करणश्चेति समासः । **क्रियत इति** । सामान्यविशेषभावेन निर्देशः ।

**शब्दाधिक्यादिति** । उपहासपरमेतच्चोदकस्य वचनम् । अशब्दार्थस्याऽलाभादिति भावः ।

**गौरित्ययमाहेति** । यद्यपि नित्ये शब्दार्थसंबन्धे उपात्तस्याऽर्थस्य त्यागो नास्ति, तथापि प्रसिद्धिवशादेतदभिधीयते—'**अर्थपदार्थकतायाः प्रच्युत**'इति । तत्त्वतस्त्वादावेव स्वरूपपदार्थको गोशब्दः प्रयुक्तः । सादृश्यात्तु तमर्थमनभिव्यक्तमितिशब्दो द्योतयतीति पदार्थविपर्यासकृदित्युच्यते । **अर्थपदार्थकतेति** । सबन्धे भावप्रत्ययः । संबन्धात्प्रच्युतोऽर्थादपि प्रच्युतो भवति ।

---

उ०—**ष्विति** । भाष्ये **घुग्रहणेष्वित्यादेषु** प्रदेशेष्वित्यर्थः ।

करणल्युटि अर्थाऽसङ्गतेराह—**कर्मणीति** । बाहुलकादिति भावः । **सामान्येति** । 'पाकं पचती'तिवत् ।

भाष्ये 'स्वस्मात्पदार्थात्प्रच्युतः शब्दपदार्थकः संपद्यत' इत्यन्वयः । **स्वस्मात्पदार्था**दित्यस्य विवरणम्—**यासाविति** । दार्ष्टान्तिके च—**शब्दपदार्थकता**—'स्वं रूप'मिति वचनात् । '**तस्या**' इत्यस्य 'प्रच्युत' इति शेषः । कोऽसौ लौकिकोऽर्थस्तत्राह—**नवेति यद्गम्यत इति** । तद्विवृणोति—**नवेति यत्प्रतीयत इति** । 'स लौकिकोऽर्थ' इति शेषः । **यद्यपीति** । एवं च 'स्वस्मात्पदार्था'दित्यनुपपन्नं, सर्वस्यापि स्वपदार्थत्वात्, प्रच्युतिश्चानुपपन्नेति भावः । **त्यागो नास्तीति** । चाऽर्थाऽन्तरग्रहणाऽभावस्याप्युपलक्षणम् । **प्रसिद्धिवशादिति** । लोकप्रसिद्ध्यैव तत्र स्वपदार्थत्वव्यवहारः । तेषामेव—'अस्यायं प्रसिद्धोऽर्थस्त्यक्तोऽप्रसिद्धश्च गृहीत' इति प्रसिद्ध्या भाष्ये प्रच्युत्यङ्गीकारावुक्ताविति भावः । वस्तुतो न प्रच्युत्यादिकमित्याह—**तत्त्वत इति** । **सादृश्यादिति** । '**अर्थ**भेदाच्छब्दभेद'इति पक्षे इदम् । एकशब्दत्वे त्वभेदादिति बोध्यम् । वस्तुतः प्रच्युत्यङ्गीकारौ तयोरर्थयोर्बोधाऽविषयत्व-बोधविषयत्वे एव, न तु मुख्याविति बोध्यम् । **पदार्थविपर्यासकृदिति** । लोके शब्दविशेषणकाऽर्थप्रतीतिः, शास्त्रेऽर्थविशेषणकशब्दस्य । इतिशब्दसमभिव्याहारे विपरीतमिति विपर्यासः । भाष्येऽपि—'**स्वस्मात्पदार्थात्प्रच्युत**' इत्यस्य—'विशेष्यभूता'दिति शेषः । अन्यथाऽर्थप्रतीतेः शब्दाऽनालिङ्गिताया अभावेन एतदसङ्गतिः स्यादिति दिक् ।

समानशब्दप्रतिषेधः ॥ ४ ॥

समानशब्दानां प्रतिषेधो वक्तव्यः । नवा कुण्डिका, नवा घटिकेति । किंच स्याद्यद्येतेषामपि विभाषासंज्ञा स्यात् ? 'विभाषा दिक्समासे बहुव्रीहौ' [ १ । १ । २८ ] । दक्षिणपूर्वस्यां शालायाम् । अचिरकृतायां संप्रत्ययः स्यात् ।

न वा विधिपूर्वकत्वात्प्रतिषेधसंप्रत्ययो यथा लोके ॥ ५ ॥

न वैष दोषः । किं कारणम् ? 'विधिपूर्वकत्वात्' । विधाय किंचिन्नवेत्युच्यते, तेन प्रतिषेधवाचिनः संप्रत्ययो भवति । तद्यथा लोके—'ग्रामो भवता गन्तव्यो नवा' ? नेति गम्यते ।

अस्ति कारणं येन नवेति लोके प्रतिषेधवाचिनः संप्रत्ययो भवति । किं कारणम् ? विलिङ्गं हि भवाँल्लोके निर्देशं करोति । अङ्ग हि समानलिङ्गो निर्देशः क्रियतां, प्रत्यग्रवा-

---

प्र०—समानशब्दप्रतिषेध इति । समानशब्दो वाचको येषामर्थानां तेषामित्यर्थः ।

विभाषा दिक्समास इति । विभाषाशब्देनाऽभिनवलक्षणोऽर्थः प्रत्याय्यते । तत्र प्रत्यग्रवाची यो दिक्समास इति संप्रत्ययः स्यात् । दिशो नित्यत्वान्नवपुराणत्वाऽसंभावात्तन्निमित्तो यदा शालायां व्यपदेशः—दक्षिणपूर्वा शाला, सा चाभिनवा तदा संज्ञा स्यादित्यर्थः । संज्ञाकार्यव्यङ्ग्यं च प्रत्यग्रत्वं स्यात् ।

न वा विधिपूर्वकत्वादिति । प्रदेशवाक्यार्थं पर्यालोच्येयं संज्ञा व्यवस्थाप्यते । प्रदेशेषु च कार्याणि विधाय विभाषाशब्द उच्चारितो नवाऽर्थं गमयति । तत्र लोकवन्निपातार्थाऽवगतिर्भवति न तु प्रत्यग्रार्थाऽवगतिरित्यर्थः ।

विलिङ्गमिति । भिन्नलिङ्गं । व्यधिकरणमित्यर्थः । विलिङ्गत्वेन वैयधिकरण्यं लक्ष्यते,

---

उ०—इतिकरणस्याऽर्थनिर्देशार्थत्वे स्थिते नैव समानानां शब्दानां प्राप्तिरत आह—समान इति ।

प्रत्यग्रेति । यद्यपि 'न चेह वयं विभाषाग्रहणेन सर्वादीन्यभिसंबध्नीम' इति भाष्यपर्यालोचनया सर्वादिविशेषणत्वलाभात्प्रत्यग्रत्वं समासविशेषणमयुक्तं, तथापि दिग्वाचकसर्वादीनामर्थस्य दिशो, नवपुराणत्वाऽसंभवादुदाहरणपरभाष्याच्च तत्र 'सर्वादीनी'त्यनेन तद्घटितसमासो लक्षणीय इति भावः । तन्निमित्त इति । लक्षणेत्यर्थः । तदासंज्ञेति । 'न बहुव्रीहा'विति निषेधे प्राप्ते इदं नित्यार्थं स्यादिति भावः । भाष्ये—अचिरकृतायामिति । तस्यां नोध्यायामित्यर्थः । 'संप्रत्ययः स्या'दित्यस्य 'संज्ञाया' इति शेषः ।

ननु प्रदेशे 'विभाषा दि'गित्यादौ न नवाशब्द उच्चारितः 'नवेति विभाषे'ति सूत्रे तु न किंचिद्विधायोक्तम्, पूर्वोत्तरसाहचर्येणाऽस्य संज्ञासूत्रत्वादित्यत आह—प्रदेशेति । इयं संज्ञेति । 'नवेति विभाषे'त्येतत्संज्ञासूत्रार्थ इत्यर्थः । कार्याणि—सर्वनामसंज्ञादीनि । नवार्थं—नवाशब्दार्थम् । विभाषाशब्दस्यार्थसंज्ञात्वात् । क्वचित्तु तथैव पाठः । भाष्ये—नवेत्युच्यते इत्यस्य—तदर्थबोधको विभाषाशब्द उच्यते इत्यर्थः । प्रतिषेधवाचिन इति । 'प्रतिषेधवाच्ययं शब्द' इति प्रत्ययो भवतीत्यर्थः । नन्विति । एवं च प्रदेशाऽऽनुगुण्येन प्रकृतसूत्रेऽपि न प्रत्यग्रवाचिनो ग्रहणमित्यर्थः ।

---

१ इदं क्वचिन्न ।

चिनः संप्रत्ययो भविष्यति । तद्यथा–'ग्रामो भवता गन्तव्यो नवः' । प्रत्यग्र इति गम्यते ।

एतच्चैव न जानीमः—क्वचिद्व्याकरणे समानलिङ्गो निर्देशः क्रियत इति । अपि चात्र कामचारः प्रयोक्तुः शब्दानामभिसंबन्धे । तद्यथा—'यवागूर्भवता भोक्तव्या नवा' । यदा यवागूशब्दो भुजिना संबध्यते, भुजिर्नवाशब्देन, तदा प्रतिषेधवाचिनः संप्रत्ययो भवति—'यवागूर्भवता भोक्तव्या नवा' । नेति गम्यते । यदा [ तु ] यवागूशब्दो नवाशब्देनाऽभिसंबध्यते, न भुजिना, तदा प्रत्यग्रवाचिनः संप्रत्ययो भवति । 'यवागूर्नवा भवता भोक्तव्या' । प्रत्यग्रेति गम्यते । न चेह वयं विभाषाग्रहणेन सर्वादीन्यभिसंबध्नीमः—'दिक्समासे बहुव्रीहौ सर्वादीनि विभाषा भवन्ती'ति । किं तर्हि ? भवतिरभिसंबध्यते—'दिक्समासे बहुव्रीहौ सर्वादीनि भवन्ति विभाषे'ति ।

**विध्यनित्यत्वमनुपपन्नं प्रतिषेधसंज्ञाकरणात् ॥ ६ ॥**

विधेरनित्यत्वं नोपपद्यते । शुशाव शुशुवतुः शुशुवुः । शिश्वाय शिश्वियतुः शिश्वियुः† । किं कारणम् ? 'प्रतिषेधसञ्ज्ञाकरणात्' । प्रतिषेधस्येयं संज्ञा क्रियते ।

---

प्र०—न तु प्रतिषेधवाचिनो नवाशब्दस्य लिङ्गयोगोऽस्ति ।

**एतच्चैवेति** । नैव क्वचिद्व्याकरणे समानलिङ्गो निर्देशः क्रियते इत्यर्थः । 'विभाषा सेनासुरे'ति यद्यपि समानलिङ्गो निर्देशस्तथापि भिन्नविभक्तित्वात्सामानाधिकरण्याऽभावः ।

**अपिचेति** । तत्र सामर्थ्याद्विशेषावगतिः । यदाऽप्राप्ते यवागूभोजने वाक्यमुदीर्यते तदा प्रत्यग्रार्थावगतिः । यदा त्वातुरं प्रति गुरुभोजननिषेधार्थमुच्यते, तदा निषेधाऽवगतिः । **न चेहेति** । क्रियायाः प्राधान्यात्सैव विभाषाग्रहणेन संबध्यते, नतु तदङ्गमित्यर्थः । तदेवं स्थितमेतत्—'नवा विधिपूर्वकत्वा'दिति ।

**विध्यनित्यत्वमिति** । विकल्प इत्यर्थः । नवाशब्द एकनिपातः प्रतिषेधवाची, तस्येहो-

उ०—**भिन्नेति** । अग्रे 'समानलिङ्ग'इति दर्शनाद्दिशब्दो भिन्नार्थ इति भावः । **नन्विति** । अव्ययत्वादिति भावः ।

**नैवेति** । भाष्ये **क्वचित्क्रियत इत्येतच्चैव न जानीम**' इत्यन्वयः । '**नवा विधी**'त्युक्तवतोऽयं ग्रन्थः । एवं च शास्त्रे समानलिङ्गनिर्देशस्य क्वाऽप्यभावान्न क्वापि प्रत्यग्राऽर्थावगतिरित्याशयः ।

ननूभयविधाऽन्वयसंभवे कथमन्यतरनिर्णय इत्यत आह—**तत्रेति** । **अप्राप्ते यवागूभोजन इति** । अकर्तव्यत्वेनाऽवगते इत्यर्थः । 'प्ररोचनाये'ति शेषः । **न तु तदङ्गमिति** । भवतिक्रियाकर्त्रुद्देश्यरूपं तदङ्गमित्यर्थः । भाष्ये **विभाषा भवन्ती**त्यत्र 'विभाषे'त्यग्रे 'सर्वनामानी'ति शेषः '**भवन्ति विभाषे**'त्यस्य '**सर्वनामानी**'त्यादिः ।

ननु दिक्समासेऽपि नित्यनिषेधे 'न बहुव्रीहा'विति सामान्यसूत्रेणैव सिद्धे 'विभाषा दि'गिति

---

† ६ । १ । ३०

तेन विभाषाप्रदेशेषु प्रतिषेधस्यैव संप्रत्ययः स्यात् ।

**सिद्धं तु प्रसज्यप्रतिषेधात् ॥ ७ ॥**

सिद्धमेतत् । कथम् ? 'प्रसज्यप्रतिषेधात्' । प्रसज्य किंचिन्नवेत्युच्यते तेनोभयं भविष्यति ।

**विप्रतिषिद्धं तु ॥ ८ ॥**

विप्रतिषिद्धं तु भवति । अत्र न ज्ञायते 'केनाभिप्रायेण प्रसजति, केन निवृत्तिं करोती'ति ।

**न वा प्रसङ्गसामर्थ्यादन्यत्र प्रतिषेधविषयात् ॥ ९ ॥**

न वैष दोषः । किं कारणम् ? 'प्रसङ्गसामर्थ्यात्' । प्रसङ्गसामर्थ्याच्च विधिर्भविष्यति, अन्यत्र प्रतिषेधविषयात् । प्रतिषेधसामर्थ्याच्च प्रतिषेधो भविष्यति, अन्यत्र विधिविषयात् ।

तदेतत्क सिद्धं भवति । याऽप्राप्ते विभाषा । या हि प्राप्ते कृतसामर्थ्यस्तत्र पूर्वेण विधिरिति कृत्वा प्रतिषेधस्यैव संप्रत्ययः स्यात् । एतदपि सिद्धम् । कथम् ? विभाषेति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् ?

प्र०—पादानादिति भाव. । परिहारान्तराभिधानाय तु 'न बहुव्रीहावित्यसंबद्धं स्या'दिति नोक्तम् ।

**सिद्धं त्विति** । प्रतिषेधाद्विधिरनुमास्यते, ततो विकल्पः सेत्स्यतीत्यर्थः ।

**विप्रतिषिद्धं त्विति** । एकविषययोर्विधिप्रतिषेधयोर्विरोधादित्यर्थः ।

**न वा प्रसङ्गेति** । सामर्थ्याद्विधिप्रतिषेधयोः पर्यायो भविष्यतीत्यर्थः ।

**महती संज्ञेति** । तेन द्वावत्र संज्ञिनौ विकल्पप्रतिषेधावित्यर्थः । यदि हि केवलः प्रतिषेध.

---

उ०—सूत्रस्य वैयर्थ्यापत्तिरत आह—**परिहारान्तरेति** । इति सिद्धे 'विभाषा दि'गित्यसंबद्धं स्यादित्यर्थः ।

ननु प्रसक्तस्य निषेधेऽभाव एव दृष्टो, न तु विकल्पोऽत आह—**प्रतिषेधादिति** । 'विभाषा श्वे'रित्यादौ पिद्विषये विधेरनुमानं करिष्यत इत्यर्थः । निषेधानुपपत्तिकल्पितशास्त्रेण प्रसज्येति वार्त्तिकार्थ इति भावः । एवं च षोडशिग्रहणाऽग्रहणवदेकविषयत्वाद्विकल्पसिद्धिरिति तात्पर्यम् । **तत इति** । अन्यथा कल्पितं शास्त्रं व्यर्थं स्यात् । **प्रक्षालनाद्धी**ति न्यायविरोधान्न निषेधार्थमेव तदिति भावः ।

ननु विकल्पो विरुद्धविषय एवेति किमुच्यते **विप्रतिषिद्धं त्विति**, अत आह—**एकेति** । 'युगप'दिति शेषः । विप्रतिषेधोपपादकं भाष्यम् —**अत्र नेति** । **प्रसजति** । 'भाव'मिति शेषः ।

प्रसज्यत इति **प्रसङ्गो**—विधिः । **प्रतिषेधविषयादि**त्यस्य कालविशेषविशिष्टात्ततोऽ**न्यत्र** तत्रैव कालान्तरविशिष्टे इत्यर्थः । निषेधसामर्थ्यलब्धोऽयमर्थः । सामर्थ्यात्प्रतिषेधविषयादन्यत्र विधिरित्युक्ते यत्फलितं तदाह **प्रतिषेधसामर्थ्याच्चे**ति । इदमपि पूर्ववद्व्याख्येयम् । तद्ध्वनयन्नाह—**पर्याय इति** ।

भाष्ये **या हि प्राप्त इति** । केवलोभयत्र विभाषारूपा चेत्यर्थः । **कृतसामर्थ्य इति** । **पूर्वेणैव** कॢप्तशास्त्रेणैव, विधिः **कृतसामर्थ्यो**—विहितविधिकल्पकनिषेधीयशक्तिक इत्यर्थः । एवं च तत्र

लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्—उभयोः संज्ञा यथा विज्ञायेत नेति च, वेति च । तत्र या तावदप्राप्ते विभाषा, तत्र 'प्रतिषेध्यं नास्ती'ति कृत्वा 'वे'त्यनेन विकल्पो भविष्यति । या हि प्राप्ते विभाषा तत्रोभयमुपस्थितं भवति—नेति च, वेति च । तत्र 'ने'त्यनेन प्रतिषिद्धे 'वे'त्यनेन विकल्पो भविष्यति । एवमपि—

**विधिप्रतिषेधयोर्युगपद्वचनाऽनुपपत्तिः ॥ १० ॥**

विधिप्रतिषेधयोर्युगपद्वचनं नोपपद्यते । शुशाव शुशुवतुः शुशुवुः । शिश्वाय शिश्वियतुः शिश्वियुः । किं कारणम् ?

**भवतीति चेन्न प्रतिषेधः ॥ ११ ॥**

भवतीति चेत्प्रतिषेधो न प्राप्नोति ।

**नेति चेन्न विधिः ॥ १२ ॥**

नेति चेद्विधिर्न सिध्यति ।

**सिद्धं तु पूर्वस्योत्तरेण बाधितत्वात् ॥ १३ ॥**

सिद्धमेतत् । कथम् ? पूर्वविधिमुत्तरो विधिर्बाधते । इतिकरणोऽर्थनिर्देशार्थ

प्र०—सञ्ज्ञी स्यात्, सञ्ज्ञाकरणमनर्थकं स्यात्, विभाषाप्रदेशेषु 'ने'त्येव ब्रूयात् । तत्र समुदायस्येय संज्ञेति विभाषाप्रदेशेषु विकल्पप्रतिषेधावुपतिष्ठेते । अप्राप्तविभाषासु च प्राप्त्यभावात्प्रतिषेधस्याऽव्यापाराद्विकल्प एवोपतिष्ठते ।

**एवमपीति** । यद्यपि विरुद्धयोरेका सञ्ज्ञा क्रियते,, तथापि प्रदेशेषु युगपद्विरोधाद्भावाऽभावौ विधातु न शक्येते इत्यर्थः ।

**सिद्धं त्विति** । उभयत्र विभाषासु प्रतिषेधेन समीकृते विषये पश्चाद्विकल्प प्रवर्तत इत्यर्थः । यदि तु पूर्वं विकल्पः प्रवर्तते पश्चात्प्रतिषेधस्ततो विकल्पप्रवृत्तिरनर्थिकैव स्यात् । आनु-

उ०—विधिकल्पनाऽभावात्प्रतिषेधमात्रप्रत्ययः स्यादिति भावः । एतद्भाष्यादपि सामान्यशास्त्रप्राप्तनिषेधे विकल्पं वदन्तो **मीमांसकाः** परास्ताः ।

**महत्याः संज्ञाया इति** । भाष्येण संज्ञैव न कर्तव्येति विवक्षितम्, न तु लघ्वी कर्तव्येति इत्याह—**यदि हीति** । **समुदायस्येति** । प्रत्येकधर्मावच्छिन्नस्योभयस्येत्यर्थः । **विकल्पप्रतिषेधाविति** प्राप्तविभाषाविषये इत्यर्थः । **विकल्पएवोपेति** । उभयोः सञ्ज्ञाकरणेऽपि निषेधस्यान्वयाऽयोग्यत्वाद्द्वितीयस्यैवोपस्थितिरिति भावः । अत्राऽप्राप्तविभाषाशब्देन केवलाऽप्राप्तविभाषोच्यते ।

**युगपदिति** । अनवगतसंज्ञिद्वयक्रमोपस्थानस्य चोद्यमेतदित्यभिप्रायः । **भावाऽभावाविति** । इमावेव भाष्ये विधिप्रतिषेधशब्देनोक्तौ ।

भाष्ये—**पूर्वस्योत्तरेणेति** । **पूर्वस्य**—प्रतिषेधस्य, **उत्तरेण**—विकल्पेन । बाधश्चाऽत्र न निषेधप्रवृत्तिप्रतिबन्धः, किंतु तत्फलस्याऽभावनिष्ठसार्वकालिकत्वस्य प्रतिबन्ध इति बोध्यम् । नन्वेवमपि पूर्ववाक्येन

इत्युक्तम् ।

**साध्वनुशासनेऽस्मिन् यस्य विभाषा तस्य साधुत्वम् ॥ १४ ॥**

**साध्वनुशासनेऽस्मिञ्छास्त्रे यस्य विभाषा क्रियते स विभाषा साधुः स्यात् ।**

प्र०—पूर्वी च यैव संज्ञाविधावाश्रिता सैव प्रदेशवाक्येष्वाश्रीयते । उभयत्रविभाषाऽर्था चेयं संज्ञा, प्राप्तविभाषायामप्राप्तविभाषाया च संज्ञाकरणस्याऽनुपयोगात् । तथाहि प्राप्तविभाषासु पक्षे निवृत्तिः क्रियते, पक्षे तु प्रवृत्तिः स्थितैव । अप्राप्तविभाषासु च पक्षे कार्यस्य प्रवृत्ति क्रियते, पक्षान्तरे त्वप्रवृत्तिः स्थितैवेति नास्ति तत्र संज्ञाफलम् । 'विभाषा श्वे'रित्यत्र तु यदि विधिमुखेन विभाषा-श्रुतिः प्रवर्तते, पित्स्वेव संप्रसारणं विभाषा स्यात्, किल्सु यजादित्वान्नित्यमेव स्यात् । अथ प्रतिषेधमुखेन प्रवृत्तिस्तदा किल्स्वेव विकल्प इति, पित्सु न स्यात् । संज्ञाकरणे तु पूर्वं प्रतिषेधे किल्सु प्रवृत्ते, पश्चाद्विधिमुखेन सर्वत्र पक्षे संप्रसारणस्य प्रवर्तनादिष्टं सिध्यति । यदा तु प्रतिलक्ष्यं भेदेन 'विभाषा श्वे'रित्यस्य व्यापार क्वचिद्विधिमुखेन, क्वचित्प्रतिषेधमुखेन तदा संज्ञाकरणमन्तरे-णापि सिध्यतीत्यशिष्योऽय योग इति वक्ष्यते—'अशिष्यो वा विदितत्वा'दिति ।

**साध्वनुशासन इति** । साधुत्वप्रतिपादनार्थत्वाच्छास्त्रस्य, साधुत्वस्यैव प्राधान्याद्विकल्पेन सम्बन्धः स्यान्न तु तदङ्गभूतानां समासंज्ञादीनामिति भाव. । ततश्च 'विभाषा श्वे'रित्यस्याऽय-मर्थः स्यात्—'विभाषा श्वयतेः साधु संप्रसारणं भवति पक्षे त्वसाध्वि'ति ।

उ०—'न'शब्द एवादेशः स्यात्, तत्रार्थपरत्वे मानाऽभावादत आह—**इतिकरण इति** । एवं चोभयत्रापीति शब्दान्वय इति भाव । एवं चाऽर्थद्वयसंज्ञाकरणसामर्थ्यादेव वाक्यभेदेन क्रमेणान्वय इति भावः । एवं च केवलप्राप्तविभाषायामुभयत्रविभाषाया च क्रमेण निषेधविकल्पयोरुपस्थितिः, शुद्धाऽप्राप्तविभाषाया तु निषेधस्याऽन्वयाऽयोग्यत्वाच्छुद्धविकल्पोपस्थितिरिति तात्पर्यम् । पूर्वविकल्पाऽप्रवृत्तौ हेत्वन्तरमाह-**आनुपूर्वी चेति। अनुपयोगादिति** । **उभयत्रेति**रिहैत्यकेनैकगृहीतविकल्पे शक्यैव सिद्धेरिति भाव । **पक्षे निवृत्तिरिति** । एवं च तत्र निषेधतात्पर्यकतयैव प्रवृत्तिरिति भावः । **अप्राप्ते ति** । तत्र विधितात्पर्यकतयैव प्रवृत्तिरिति भावः ।

**पित्स्वेवेति** । तत्राऽप्राप्तेरिति भावः । एकस्योभयत्र तात्पर्यं तु न सम्भवतीत्याशयः । भावतात्पर्य-कतालोभेन पिद्विषयतैव स्यादिति तत्त्वम् । अस्योभयत्रविभाषाविषयत्वं भाष्ये 'विभाषा श्वे'रित्यस्यैवोदाहरण-दानेन बोधितम् । एवं च तदर्थमावश्यकेऽस्मिन्, अन्यत्रापि स्वशास्त्रगृहीतसङ्केतेनैव बोधाच्च 'या हि प्राप्ते विभाषा तत्रोभयमुपस्थित'मित्याद्युक्तभाष्यविरोध इति दिक् ।

**'साधुत्वप्रतिपदानाच्छास्त्रस्ये'**इति पाठः । **शास्त्रस्येति** कर्तुः शेषत्वे षष्ठी । क्वचित्तु 'साधुत्वप्रति-पादनार्थत्वा'दिति पाठः । **प्राधान्यादिति** । 'यदिह परिनिष्ठितं तत्साध्वि'ति अर्थापत्तिकल्पितवाक्यस्यैव मुख्यत्वात्तेन मुख्यतया साधुत्वस्यैव विधानादित्याशयः । **तदङ्गभूतानामिति** । तदुद्देश्यभूतानामित्यर्थः । भाष्ये—**यस्य विभाषा क्रियत इति** । यत्सम्बन्धेन विभाषोच्यत इत्यर्थः । **समासश्चैव हीति** । **हि**—यतः समासो विभाषा क्रियते, समासो विभाषेत्युच्यते, तत्र समासोद्देशेन साधुत्वविधानात्तस्यैव विकल्पः स्यादिति भावः । साधुत्वं च जातिविशेषः । समासप्रकरणीयविभाषाऽधिकारस्य भाष्ये प्रत्याख्यानादाह—**विभाषा श्वेरिति** ।

समासश्चैव हि विभाषा, तेन समासस्यैव विभाषा साधुत्वं स्यात् । अस्तु । यः साधुः स प्रयोक्ष्यते, असाधुर्न प्रयोक्ष्यते । न चैव हि कदाचिद्राजपुरुष इत्येतस्यामवस्थायामसाधुत्वमिष्यते । अपि च—

**द्वैधाऽप्रतिपत्तिः ॥ १५ ॥**

द्वैधं शब्दानामप्रतिपत्तिः स्यात् । इच्छामश्च 'पुनर्विभाषाप्रदेशेषु द्वैधं शब्दानां प्रतिपत्तिः स्या'दिति, तच्च न सिध्यति ।

यस्य पुनः कार्याः शब्दाः, विभाषाऽसौ समासं निर्वर्त्तयति । यस्यापि नित्याः शब्दास्तस्याप्येष न दोषः । कथम् ? न विभाषाग्रहणेन साधुत्वमभिसंबध्यते । किं तर्हि ? समाससंज्ञाऽभिसंबध्यते—'समास इत्येषा संज्ञा विभाषा भवती'ति । तद्यथा—'मेध्यः पशुर्विभाषितो मेध्योऽनड्वान्विभाषित' इति । नैतद्विचार्यते—अनड्वाग्नान-

प्र०—**अस्तु यः यः साधुरिति** । यथा भक्ष्याऽभक्ष्यसंनिधौ भक्ष्यमेवोपादीयते ।

**नचैव हीति** । सर्वदा त्वस्य साधुत्व, नोभयरूपत्वमित्यर्थः ।

**द्वैधाऽप्रतिपत्तिरिति** । साधुत्वविकल्पने विभाषाग्रहणस्योपयुक्तत्वाच्छिश्वियतुरित्यादि रूपं न सिध्यतीत्यर्थ । **यस्य पुनरिति** । एव मन्यते—व्याकरणेनैव शब्दा उत्पाद्यन्ते, तन्मते विभाषाग्रहणेनाऽपूर्वत्वेन विधेयत्वात्सम्प्रसारणमेव विकल्प्यत इति द्वैधं प्रतिपत्ति शब्दाना सिध्यतीति ।

**यस्यापीति** । साधुत्वस्याऽपौरुषेयत्वादविकल्प्यत्वात्तदङ्गानामेव विकल्प । **तद्यथेति** । पशुत्वाऽनडुत्त्वयोरविकल्प्यत्वात्क्रिया विकल्प्यते । नन्वन्यत्रोक्तं—'**न च संज्ञाया भावाभावाविष्येते**'— इति, इह तूक्तं—**संज्ञाऽभिसंबध्यते**—इति, ततश्च विरोधः । नैष दोष । इह वृत्तिवाक्ययोर्मुख्यार्थभेदादभिन्नार्थत्वमाश्रित्योक्तम्। अन्यत्र तु व्यपेक्षैकार्थीभाव भेदाद्भिन्नार्थत्व माश्रित्यैकार्थी-

उ०—साधुत्वविकल्पे दूषणमाह भाष्ये—**न चैवेत्यादिना** । तद्व्याचष्टे—**सर्वदास्त्विति** । सादृश्यादसाधुत्यागपुरःसरं साधूपादानं दुष्करमित्यपि बोध्यम् ।

**तत्र साध्वनुशासन** इत्युक्त्या—शब्दनित्यत्वपक्ष एवायं दोषः, न तु कार्यत्वपक्षे— इत्युक्तम् । तदुपपादकं—'**यस्य पुन**'रित्यादिभाष्यम् ।

प्राधान्यात्साधुत्वस्यैव विकल्पः स्यादिति यदुक्तं, तत्राह—**साधुत्वस्येति** । 'संज्ञायाः श्रुतत्वेन, साधुत्वस्याऽश्रुतत्वेन श्रुतस्य श्रुतेनैव संबन्धस्य न्याय्यत्वात्प्रयोगाऽसमवायिलडादिस्थले श्रुते विधेयत्वस्यावश्यकत्वाच्चेत्यपि बोध्यम् । **पशुत्वेति** । साक्षाच्छ्रूयमाणेऽप्ययोग्यत्वाद्यदा न संबन्धस्तदा, किं वक्तव्यमश्रूयमाणेऽयोग्ये संबन्धो नेतीत्यर्थः । **अन्यत्रेति** । समर्थसूत्रे । **मुख्यः**—प्रधानः । **अभिन्नार्थत्वमिति** । एवं च तदर्थे कश्चित्साधुत्वेनान्वाख्यायमानोऽनन्वाख्यातस्य तदर्थकस्याऽन्यस्य निवर्त्तकः स्यादिति तस्यापि साधुत्वार्थं विभाषाधिकार आवश्यक इति भावः । वाक्ये—व्यपेक्षा परस्पराकाङ्क्षारूपा, पदार्थानामपृथगुपस्थितिविषयत्वमेकार्थीभावो—वृत्तिविषयः । एवं च वृत्तिवाक्ययोर्भिन्नार्थत्वान्न वाक्यानुशासनाय विभाषाग्रहणम् । किंतु वृत्तिविषये एव संज्ञाविकल्पार्थं वाच्यम् । न च वृत्तौ संज्ञायाः स इष्यते । तस्मादेकार्थीभावस्यैव मन्दमत्यनुग्रहाय स विशेषणमिति तत्रोक्ततात्पर्यमित्यविरोध इति भावः । भाष्ये—**समाससंज्ञेत्यस्य**

ड्वानिति । किं तर्हि ? आलब्धव्यो नालब्धव्य इति ।

**कार्येषु युगपदन्वाचययौगपद्यम् ॥ १६ ॥**

कार्येषु शब्देषु युगपदन्वाचयेन च यदुच्यते, तस्य युगपद्वचनता प्राप्नोति । 'तव्यत्तव्यानीयरः' [ ३ । १ । ९६ ] 'ढक् च मण्डूकात्' [ ४ । १ । ११९ ] इति ।

यस्य पुनर्नित्याः शब्दाः, प्रयुक्तानामसौ साधुत्वमन्वाचष्टे । ननु च यस्यापि कार्यास्तस्याप्येष न दोषः । कथम् ? 'प्रत्ययः परो भवती'त्युच्यते† । न चैकस्याः प्रकृतेरनेकस्य प्रत्ययस्य युगपत्परत्वेन संभवोऽस्ति ।

---

प्र०—भावे एव संज्ञाया भावाऽभावौ नेष्येते इत्युक्तमित्यविरोधः ।

नित्यवादी कार्ये पक्षे दूषणमाह—**कार्येष्विति** । युगपद्भावे युगपच्छब्दो वर्तत इति द्वन्द्वः कृतः । अन्वाचयः समुच्चयोऽभिमतो, यस्य चकारेण स्वरितत्वेन वा विधानम् । यस्य कार्याः शब्दाः स प्रयोगनिरपेक्षः शब्दानन्वाचष्ट इति तव्यादीनां युगपदुत्पत्तिः प्राप्नोति ।

**नचैकस्या इति** । ननु व्यवहितेऽपि परशब्दः प्रवर्तते । सत्यम् । अन्तरालस्थमनपेक्ष्यानन्तर्यमारोप्य तत्र परशब्दप्रयोगः । निर्दिष्टग्रहणं त्वानन्तर्यार्थमिति कुतो व्यवहितस्य प्रयोग । कथं तर्ह्युक्तम्—**'एका प्रकृतिर्बहवश्च यञ'** इति ? तत्र यञाकृतेरेकत्वात्तस्याश्च परत्वादानन्तर्याच्चाऽदोषः । तव्यदादयस्त्वेकाकृतियुक्ता न भवन्ति ।

---

उ०—तद्विषयैकार्थीभाव इत्यर्थः ।

ननु युगपच्छब्दस्यैककाल इत्यर्थकस्य समस्यर्थवृत्तेरन्वाचयशब्देनाऽतादृशेन कथं द्वन्द्व इत्यत आह—**युगपद्भाव इति** । 'कार्येषु शब्देषु यौगपद्यान्वाचयविषये तेषां यौगपद्यं युगपत्प्रयोगः प्राप्नोती'ति वार्तिकाक्षरार्थः । भाष्ये—'युगपद्वचनते'ति बहुव्रीहेस्तल् । **अन्वाचयेनेत्युक्त्वा ढक्चेति** समुच्चयोदाहरणमसङ्गतमित्यत आह—**समुच्चय इति** । **स्वरितत्वेन वेति** । यथा **काश्यादिभ्यष्ठञ्ञिठाविति** वर्तमाने **वाहीकग्रामेभ्यश्चे**त्यत्र । नित्यशब्दवादे तु प्रयोगदृष्टानामेव शास्त्रे काल्पनिकविधेयत्वेनेष्टप्रत्ययविभागसिद्धिः । रेखागवयन्यायस्याद्यन्तावितिसूत्रे भाष्य एव वक्ष्यमाणत्वात् ।

**व्यवहितेऽपीति** । लोके तथा दर्शनादिति भावः । **आनन्तर्यमारोप्येति** । अनेन परादिशब्दानामव्यवहित एव प्रवृत्तिः, अत एव **व्यवहिताश्चे**ति **सूत्रं** सार्थकमिति भावः । शास्त्रे तु सर्वथा न व्यवहिते प्रवृत्तिरित्याह **निर्दिष्टग्रहणं त्विति** । तुश्चाऽर्थे । **छन्दसि परेऽपि परश्चे**त्यादावपि उत्तराङ्गविकलतस्मादिति परिभाषायाः प्रवृत्तेरिति भावः । **कथं तर्हीति** । **सरूपसूत्रे** इति भावः । **एकाकृतीति** । एकानुपूर्वी हि एकाकृतिरत्र ।

---

† ३ । १ । २

नापि ब्रूमः प्रत्ययमाला प्राप्नोतीति । किं तर्हि ? 'कर्तव्य'मिति प्रयोक्तव्ये युगपद् द्वितीयस्य तृतीयस्य च प्रयोगः प्राप्नोतीति । नैष दोषः । 'अर्थगत्यर्थः शब्दप्रयोगः' । अर्थं संप्रत्याययिष्यामीति शब्दः प्रयुज्यते । तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम्, 'उक्तार्थानामप्रयोगः' इति ।

**आचार्यदेशशीलने च तद्विषयता ॥ १७ ॥**

आचार्यशीलनेन देशशीलनेन च यदुच्यते, तस्य तद्विषयता प्राप्नोति । 'इको ह्रस्वोऽङ्यो गालवस्य' [ ६ । ३ । ६१ ] 'प्राचामवृद्धात्फिन्बहुलम्' [ ४ । १ । १६० ] इति गालवा एव ह्रस्वान्प्रयुञ्जीरन्, प्राक्षु चैव हि फिन् स्यात् । तद्यथा—'जमदग्निर्वा एतत्पञ्चममवदानमवाद्यत्तस्मान्नाऽजामदग्न्यः पञ्चावत्तं जुहोति' ।

यस्य पुनर्नित्याः शब्दा, गालवग्रहणं तस्य पूजार्थं, देशग्रहणं च कीर्त्यर्थम् । ननु च यस्यापि कार्याः शब्दास्तस्यापि गालवग्रहणं पूजार्थं स्याद्देशग्रहणं च कीर्त्यर्थम् ।

---

प्र०—नापि ब्रूम इति । एकस्याः प्रकृते सर्वे भवन्तीति न ब्रूमः । किं तर्हि ? प्रत्ययान्तरेण प्रकृत्यन्तरस्याऽऽक्षेपात्कर्तव्यमिति प्रयुयुक्षिते करणीयादीनामपि प्रयोगः प्राप्नोति ।

अर्थगत्यर्थ इति । 'तव्यत्तव्यानीयर' इत्यस्माद्वाक्यान्तराण्युपप्लवन्ते तत्प्रतिपादकानि—'धातोस्तव्यद्भवति भावकर्मणो'रित्यादीनि । तत्र कर्तव्यशब्देन तस्याऽर्थस्य प्रतिपादितत्वात्करणीयशब्दो न प्रयुज्यते ।

आचार्येति । आचार्यस्य देशस्य च पुनः पुनः संकीर्तनमाचार्यदेशशीलनं, तत्र तस्य शब्दस्य तद्विषयत्वमेव स्यात् । सर्वप्रयोक्तृत्वप्रसङ्गे गालवस्येति नियमार्थं स्यात् । यस्य पुनरिति । अनादित्वाच्छब्दव्यवहारस्य नित्यत्वपक्षे नास्ति प्रयोक्तृत्वनियमः । केवलं गालवः स्मर्तृत्वेन स्मृतोऽस्य शास्त्रस्य प्रामाण्यं प्रतिपादयितुमिति पूजार्थमाचार्यग्रहणम् । शास्त्रस्य ह्यनाद्यर्थप्रतिपादकत्वात्पूजा भवति । कीर्त्यर्थमिति । कीर्तौ सत्यां तेषां स्वर्गाद्यवस्थानं स्थिरं भवति यथा इन्द्रद्युम्नादीनाम् ।

ननु च यस्यापीति । कार्यपक्षेऽपि पूजा शक्यते व्याख्यातुं—'यस्माद्गालवेन ह्रस्वत्वं

---

उ०—भाष्ये—नापि ब्रूम इत्यस्य नैव ब्रूम इत्यर्थः ।

अर्थोऽपि समुदायस्येति शङ्कमानं प्रत्याह—तव्यदिति । प्रत्ययादिसंज्ञास्तव्यत्तव्यानीयर इति बहुवचननिर्देशात्प्रत्येकमिति प्रत्येकमेव भावाद्यर्थकत्वमिति भावः ।

पुनः पुनः संकीर्तनमिति । अत्र पुनः पुनरित्यस्योपयोगश्चिन्त्यः । एकैकस्मिन् शास्त्रे तदभावाच्च । तस्मात्संकीर्तनमात्रमेवाऽत्र शीलनमिति बोध्यम्; तेन यत्कार्यमुच्यते इति वार्त्तिकाक्षरार्थः । अत एवाग्रे भाष्ये तत्कीर्तने चेत्येवोक्तम् । तद्विषयत्वमुपपादयति—सर्वप्रयोक्त्रिति । 'इको ह्रस्वो भवति, तत्प्रयोक्तृत्वं च गालवस्ये'त्यादिक्रमेण सूत्रार्थः । भाष्ये–प्राक्षु चैवेति । प्राग्देश एव फिन्प्रयोगः स्यादित्यर्थः । अनादित्वादिति । एवं च गालवातिरिक्तशिष्टैरपि प्रयुज्यमानत्वान्नियमासंभवः । किंचतत्पक्षे शास्त्रं स्वागवयन्यायेन कल्पितशब्दविषयमिति कल्पितशब्दे प्रयोक्तृनियमासंभव इति भावः । शास्त्रस्य

**तत्कीर्तने च द्वैधाऽप्रतिपत्तिः ॥ १८ ॥**

तत्कीर्तने च द्वैधं शब्दानामप्रतिपत्तिः स्यात् । इच्छामश्च पुनराचार्यग्रहणेषु देशग्रहणेषु च द्वैधं शब्दानां प्रतिपत्तिः स्यादिति, तच्च न सिध्यति ।

**अशिष्यो वा विदितत्वात् ॥ १९ ॥**

अशिष्यो वा पुनरयं योगः । किं कारणम् ? 'विदितत्वात्' । यदनेन योगेन प्रार्थ्यते तस्याऽर्थस्य विदितत्वात् । येऽपि ह्येतां संज्ञां नारभन्ते तेऽपि'विभाषे'त्युक्तेऽनित्यत्वमवगच्छन्ति । याज्ञिकाः खल्वपि संज्ञामनारभमाणा 'विभाषे'त्युक्तेऽनित्यत्वमवगच्छन्ति । तद्यथा—"मेध्यः पशुर्विभाषितो मेध्योऽनड्वान्विभाषितः" इति । आलब्धव्यो नालब्धव्य इति गम्यते ।

आचार्यः खल्वपि संज्ञामारभमाणो भूयिष्ठमन्यैरपि शब्दैरेतमर्थं संप्रत्याययति-

---

प्र०—प्रयुक्तं तस्मात्त्वमपि प्रयुङ्क्ष्वे'ति स्तुत्यर्थोऽर्थवाद स्यादित्यर्थः ।

इदानीं कार्यपक्षे दूषणमाह—**तत्कीर्तन** इति । कार्यपक्षेऽयमर्थः स्यात्—'यस्माद्गालवेन ह्रस्वत्वं प्रयुक्तं तस्मात्प्रयोक्तव्य'मिति ततश्च ह्रस्वत्वस्य विकल्पो न स्यात् । नित्यत्वपक्षे तु गालवो ह्रस्वस्य स्मर्ताऽन्यो दीर्घस्येति स्मृत्यन्तरानुसन्धानद्वारेण विकल्पः सिध्यतीति नित्यपक्ष एव युक्तः ।

**अशिष्यो वेति** । 'वा'शब्दो विकल्पे । तेनाकृतिपक्षे ऽप्यत्र विभाषार्थं सूत्रं कर्तव्यम् ।

---

उ०—**प्रामाण्यमिति** । एवं च **पूजार्थ**मित्यस्य **स्वशास्त्रपूजार्थमित्यर्थ** इति भावः । तदेवाह-**शास्त्रस्य हीति** । भाष्ये—**देशग्रहणं चेति** चेनाऽऽचार्यग्रहणम् । देशग्रहणस्य पूजार्थत्वं तु वक्तुमशक्यम् । देशस्य स्मर्तृत्वाद्यभावादिति भावः । **स्थिरं भवतीति** । ततश्च देशकीर्तौ तद्देशीयानां स्वरवस्थानमित्यर्थः । तेन च पाणिनेरपि तदिति भावः । ननु नित्यशब्दवादे गालवादिग्रहणस्य पूजार्थत्वे ह्रस्वाऽभावविशिष्टस्य साधुत्वबोधनं न स्यात् । तत्पक्षे लघूपायेन साध्वसाधुविवेकाय शास्त्रमिति चेन्न । 'गालवः स्मर्ता नान्य' इति स्मृत्यन्तरानुसन्धानद्वारेण विकल्पसिद्धेः । वाग्रहणे एव कर्तव्ये गालवग्रहणं व्यर्थमिति शङ्कानिरासार्थं तु भाष्ये **पूजार्थ**मित्युक्तम् ।

भाष्ये—**तत्कीर्तने चेति** । आचार्यदेशकीर्तने चेत्यर्थः । 'यस्य कार्याः शब्दास्तस्ये'ति शेषः । तदेवाह—**इदानीमिति** । **प्रयुक्तमिति** । कृतमित्यर्थः । **नित्यपक्षे त्विति** । कार्यपक्षे त्वेवं वक्तुमशक्यं,—यतो गालवेन कृतोऽतः कर्तव्यः, नान्येन कृतोऽतो न कर्तव्य इति अन्येन कृतस्य पुनः करणवैयर्थ्यात् । नह्यन्यकृतस्य पुनः करणमस्ति । नाप्यन्येनाऽकृतस्याऽकरणम् । तादृशस्यैव करणात् । एतेनाऽन्येन कृतस्याऽनुवादोऽन्याऽकृतत्वबोधनद्वारा विकल्पबोधक इति परास्तम् । पाणिनिकृतानामपि 'पचो व' इत्यादीनामन्याऽकृतत्वेन तेषामपि विकल्पापत्तेश्च । तस्मात्कार्यवादोऽसङ्गत इति दिक् ।

ननु लोकतोऽनित्यत्वार्थलाभेऽपि निषेधविकल्पयोरलाभ इत्यत आह भाष्ये—**आचार्यः खल्वपीति** । एवं च इकोरित्याद्युभयत्र विभाषायां यथा तत्र तयोर्लाभस्तथा विभाषापदघटितेऽपि भविष्यतीति नार्थ

**बहुलम्, अन्यतरस्याम्, उभयथा, वा, एकेषामिति ।**

**अप्राप्ते त्रिसंशयाः ॥ २० ॥**

**इत उत्तरं या विभाषा अनुक्रमिष्यामोऽप्राप्ते ता द्रष्टव्याः । त्रिसंशयास्तु भवन्ति—प्राप्ते, अप्राप्ते, उभयत्र वेति ।**

**द्वन्द्वे च, विभाषा जसि [ १ । १ । ३१, ३२ ] ॥**

**प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं**

---

प्र०—व्यक्तिपक्षे तु लक्ष्यभेदेन लक्षणभेदात्कचित्किञ्चिल्लक्षणं विधिमुखेन प्रवर्तते, क्वचिन्निषेधमुखेन प्रवर्तत इतीष्टसिध्या सूत्रं न कर्तव्यमित्यर्थः ।

**अप्राप्ते** इति । अधिकारोऽयम् । **त्रिसंशया** इति । त्रिष्वर्थेषु संशयो यासु तास्त्रिसंशयाः ।

**द्वन्द्वे चेति** । प्रकरणोपलक्षणार्थमेतदुपात्तम् । 'प्रथमचरमतये'त्यत्र तयग्रहणे संशयः ।

---

उ०—सूत्रेणेति भावः । **वाशब्दो विकल्पे इति** । यत्तु अर्थस्य संज्ञित्ववद्विभाषापदार्थस्यैव संज्ञात्वं, तत्राऽपीतेः संबन्धात् । न च पदजन्यपदार्थोपस्थित्यभावेनाऽन्वयाऽसंभवः । विकल्पवाचिपदस्य तदर्थे लक्षणाऽभ्युपगमात् । एवं च लक्षणातात्पर्यग्राहकमिदं सूत्रम् । अर्थे न संज्ञात्वमिति चेत् । तदर्थोपस्थितिशब्दमात्रस्य संज्ञात्वमस्तु, इतिशब्दसंबन्धसामर्थ्यादिति. तन्न । एकस्याऽनेकसंज्ञायाः शास्त्रेऽदर्शनात्, 'अनाकृतिः संज्ञे'ति वृद्धिसूत्रस्थभाष्यविरोधाच्च । **तेनाकृतीति** । तत्पक्षे लिट्त्वजातौ विधिमुखेन प्रवृत्तौ पित्येव स्यात्, न तु सर्वत्रेति सूत्रं कर्तव्यम् । सति च सूत्रे लिट्त्वजातौ प्राप्तस्य निषेधे तस्यामेव विकल्पो विधीयमानः सर्वत्र सिध्यतीति भावः । प्रत्याख्यानाशयमाह—**व्यक्तिपक्षेत्विति** । **क्वचिद्विधिमुखेनेत्यन्वयः** । **किंचिल्लक्षणम्**—उभयत्रविभाषारूपम् । उत्तरत्र तु 'क्वचित्प्रतिषेधमुखेने'त्येव पाठः । परे तु—आकृतिपक्षे किं तज्जात्याश्रयसकलव्यक्तिविषयं लक्षणम्, उत—तज्जात्याश्रययत्किंचिद्विषयम् ? नाद्यः । सूत्रारम्भेऽपि 'न'पदघटितवाक्यस्य तद्विषयताया वक्तुमशक्यत्वात् । तस्य यत्किंचिद्विषयता, 'वा'घटितस्य सर्वविषयतेति तु दुर्लभम् । नान्त्योऽपि । 'न ब्राह्मणं हन्या'दित्यादौ जातिपक्षे सर्वव्यक्तिविषयताया एव दृष्टत्वात् । किंच तत्र किं विधिमुखप्रवृत्त्या पिद्विषयत्वं, निषेधमुखप्रवृत्त्या किद्विषयत्वं वेत्यत्र विनिगमनाविरहात्सूत्रं विनाप्युभयमुखेन प्रवृत्ताविष्टसिद्धेः । न च भावतात्पर्यकता पिद्विषयत्वे विनिगमिका । 'विभाषोपयमने' इत्यादौ त्रिसंशयत्वाऽनुपपत्तेः । भावतात्पर्यकतालोभेनाऽप्राप्तविभाषात्वस्यैव संभवात् । विप्रतिषेध शास्त्रबलात्तेष्वभावतात्पर्यकताऽपि स्यादिति चेत्, प्रकृतेऽपि तुल्यम् । तस्मात्पक्षद्वयेऽपि सूत्रप्रत्याख्याने भाष्यतात्पर्यम् । किं च सूत्रे कृते त्रिसंशयप्राप्तविभाषास्वपि तत्प्रवृत्तिः स्यादिति सोच्छ्रयैतैव । लक्ष्यानुसारादप्रवृत्तौ तु सूत्रं व्यर्थमेवेति भाष्याशयः । एतदेव ध्वनयंस्त्रिसंशयाप्राप्तविभाषां दर्शयति । त्रिसंशयास्वप्राप्तविभाषात्वमेवेति भ्रमनिरासायेतरयोरपि कथनमित्याहुः ।

**इत उत्तरमित्यस्य** लाभे युक्तिमाह—**अधिकार इति** । संशयत्रयस्य क्वाप्यभावादाह—**त्रिष्विति** ।

'**द्वन्द्वे च** विभाषा जसी'त्युक्तोभयशब्दोदाहरणमसङ्गतमत आह—**उपलक्षणेति** । 'विभाषा जसी'त्यस्य द्वन्द्वविषयतया, द्वन्द्वे च संज्ञानिषेधेन सर्वनामसंज्ञायाऽप्राप्तविभाषात्वनिश्चयेन, निषेधीयप्राप्तविभाषात्व-

वोभयत्र ? उभयशब्दः सर्वादिषु पठ्यते, तयपश्चाऽयजादेशः क्रियते† । तेन वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । अप्राप्ते । अयच् प्रत्ययान्तरम् । यदि प्रत्ययान्तरम्, 'उभयी'ति ईकारो न प्राप्नोति । माभूदेवं, 'मात्रच' इत्येवं भविष्यति‡ । कथम् ? 'मात्र'जिति नेदं प्रत्ययग्रहणम् । किं तर्हि ? प्रत्याहारग्रहणम् । क्व संनिविष्टानां प्रत्याहारः ? 'मात्र'शब्दात्प्रभृत्याऽयचश्चकारात्+ । यदि प्रत्याहारग्रहणं 'कति तिष्ठन्ति' अत्रापि प्राप्नोति । 'अत' इति वर्तते× । एवमपि 'तैलमात्रा

प्र०—तत्र'तय'शब्देन 'प्रयोजनं सर्वनामाव्ययसंज्ञाया'मिति वाऽन्वर्थसंज्ञाविज्ञानाद्वा केवलस्य प्रयोगाऽभावात्तदन्तस्यैव सर्वनामत्वसम्भवात्प्रत्ययग्रहण इति परिभाषया तदन्तविधिः । तत्र यदि सर्वादिग्रहणेन तयाऽन्तं विशेष्यते । नेमशब्दोऽव्यभिचारात्, प्रथमादयस्त्वसंभवान्न विशेष्यन्ते, तदोभयशब्दस्य जसि नित्या संज्ञा विभाष्यत इति प्राप्तविभाषा स्यात् । अथ 'सर्वादीनी'ति निवृत्त, पूर्वविप्रतिषेधश्च, तदाऽप्राप्तविभाषा । अथ परविप्रतिषेधस्तदोभयत्रविभाषा ।

**प्रत्ययान्तरमिति** । आदेशपक्षे पूर्वविप्रतिषेधो वक्तव्य इति प्रत्ययान्तरपक्ष आश्रित । '**उभादुदात्तो नित्य**'मित्यत्र '**तयस्ये**'ति नानुवर्तते, तदा प्रत्ययान्तरमयज्भवति ।

**तैलमात्रेति** । प्रत्याहारे सति चकारेण मात्रशब्दो न विशेषित इति 'हृयामाश्रुभसिवसिभ्यस्त्रन्नि'ति त्रन्नन्तादपि मात्रशब्दान्ङीप्प्रसङ्ग ।

उ०—निश्चयेन वा त्रिसंशयत्वाऽभावादिति भावः । 'द्वन्द्वे' इत्यस्याऽसंबन्धे पूर्वादीनां जसि विकल्पारम्भो व्यर्थः स्यादिति तात्पर्यम् । ननु तयशब्देऽपि कथं संशयः, प्रथमादिसूत्रेण प्रत्ययमात्रस्य संज्ञा, सर्वादिसूत्रेण तूभयशब्दस्य समुदायस्येति भिन्नविषयत्वेनाऽप्राप्तविभाषात्वनिर्णयादत आह—**तत्रेति** । '**तयशब्देने**'त्यस्य 'तदन्तविधि'रित्यनेनान्वय । अन्वर्थत्वेन कथं तदन्तविधिरत आह—**केवलस्येति** । **सर्वनामत्वसंभवात्**—सर्वार्थबोधकत्वसंभवात् । तथा च तस्य सर्वार्थबोधकत्वाऽभावात्सामर्थ्येन संज्ञाविधावपि प्रत्ययग्रहणपरिभाषया तदन्तविधिरिति भावः । **पूर्वविप्रतिषेधश्चेति** । सर्वादित्वनिबन्धना संज्ञा जस्भिन्ने सावकाशा, द्वितयादिषु च विकल्पः, उभयशब्दे जस्युभयप्राप्तौ पूर्वविप्रतिषेधः । न च नित्या संज्ञाऽन्तरङ्गा, अन्तरङ्गपरिभाषाया अप्रवृत्तेः । तथाहि—न '**अन्तरङ्गं बलीय**' इत्यस्या अत्र विषयः, युगपत्प्राप्त्यभावात् । जसादेः सर्वनाम्नो विहितत्वसंपत्तये तस्याः पूर्वमेव प्रवृत्तिः, अस्यास्तु जसुत्पत्त्यनन्तरमिति स्पष्टमेव । नाप्यसिद्धं बहिरङ्गमन्तरङ्गे इत्यस्याः, अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेरनया तत्प्रवृत्तेर्वारयितुमशक्यत्वात् । बहुशस्तथा सत्त्वात् । तदुत्तरमप्येतत्प्रवृत्त्या पक्षे तदभावविशिष्टस्य साधुत्वबोधनं पूर्वादिष्विव त्रिसंशयत्वस्य भाष्योक्तस्याऽसङ्गत्यापत्तेश्चेति दिक् । भाष्ये—**तेन वेत्यादि** । तेन नित्ये प्राप्ते वा, अन्यत्राऽप्राप्ते वेत्यन्वयः ।

**प्रत्ययान्तरेति** । एवं चोभयशब्देऽस्याऽप्राप्तेरप्राप्तविभाषात्वमेवेति भावः ।

**न विशेषित इति** । न प्रत्याहारघटक इतरव्यावर्तकः, समुदायानुबन्धस्याऽवयवानुबन्धत्वाऽभावादिति भावः ।

† ५ । २ । ४४ ‡ ४ । १ । १५ + ५ । २ । ३७—४३ मात्रच्प्रत्याहारे चायचः सन्निवेशादुभयीत्यत्र ङीप् भविष्यति । × ४ । १ । ४

घृतमात्रा अत्रापि प्राप्नोति। सदृशस्याऽप्यसंनिविष्टस्य न भविष्यति प्रत्याहारेण ग्रहणम्।

**ऊर्णोर्विभाषा [ १ । २ । ३ ]॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः। कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र? असंयोगाल्लिट् कित् [ १ । २ । ५ ] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति। अप्राप्ते। अन्यद्धि कित्त्वम्, अन्यन्ङित्त्वम्।

**एकं चेन्ङित्कितौ॥**

यद्येकं ङित्कितौ, ततोऽस्ति सन्देहः। अथ हि नाना, नास्ति सन्देहः। यद्यपि नाना, एवमपि सन्देहः। कथम्? प्रौर्णुवीति। सार्वधातुकमपित् [ १ । २ । ४ ] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति। अप्राप्ते।

**विभाषोपयमने [ १ । २ । १६ ]॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः। कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं

**प्र०—सदृशस्यापीति**। प्रमाणे वर्तमान त्प्रमेये यो मात्रज्विहित स प्रत्याहारेण गृह्यते इत्यर्थः।

**ऊर्णोर्विभाषेति**। 'विभाषोर्णो'रिति सूत्र यद्यसयोगाल्लिट् किदित्यत्राऽनुवर्तते ऊर्णुश्चाऽसंयोगान्त एवेत्यसंयोगग्रहणाद्वाक्यभेदेनोर्णोः परस्येडादेर्लिटो निन्यं कित्त्वं प्राप्तं विकल्प्यते, ततः प्राप्तविभाषा। इडुपजीवनार्थं तु स्थानान्तरे सूत्रं पठितम्। अथ तत्र सूत्रं नानुवर्तते, परविप्रतिषेधश्च, ततोऽप्राप्तविभाषा। अथ पूर्वविप्रतिषेधस्तदोभयत्रेति संशयः। **अन्यद्धीति**। व्यपदेशातिदेशोऽयमिति कित्त्वङित्त्वयोर्भेदः।

**एकं चेदिति**। कार्याऽतिदेशपक्षे गुणनिषेधस्य कार्यस्यैकत्वादेकत्वमनयोरित्यर्थः। **प्रौर्णुवीतीति**। लङः उत्तमैकवचनम्। 'सार्वधातुकमपि'दित्यत्र यदि 'विभाषोर्णो'रित्येतद्वाक्यभेदेन संबध्यते तत. प्राप्तविभाषा। अथाऽसम्बन्धः, पूर्वविप्रतिषेधश्च, तत उभयत्र विभाषा, परविप्रतिषेधे त्वप्राप्ते।

**विभाषोपयमन इति**। यदा गन्धनाङ्गमुपयमनं तत्र गृह्यते, तदा प्राप्ते। पूर्ववि-

**उ०—प्रमाणे इति**। तादृशस्यैव तत्संनिवेशे सत्त्वादिति भावः।

भाष्ये—**ऊर्णोर्विभाषेति**। ऊर्णोर्धातोः कित्त्वविषयविभाषेत्यर्थः। 'वाक्यभेदेने'त्यस्य 'विकल्प्यत' इत्यनेनान्वयः। इदं सर्वं ङित्त्वकित्त्वयोरैक्याऽभिमानेन। किमर्थं तर्हि पुरस्तात्कृतमत आह—**इडुपेति**।

शङ्कते—भाष्ये **अन्यद्धीति**। **तद्व्याख्यामेद इति**। तथा च त्रिसंशयत्वाऽनुपपत्तिरिति भावः।

**गुणनिषेधस्येति**। यद्यपि ङित्कित्कार्याणि भिन्नानि बहूनि सन्ति, तथाप्यूर्णौतावन्याऽसंम्भव इतिभावः।

**इत्यत्रेति**। इत्यत्रैवेत्यर्थः। **वाक्यभेदेनेति**। पृथक्पाठसामर्थ्यादिति भावः। **परविप्रतिषेधेत्विति**। 'विज इ'डित्यतोऽर्थाधिकारादत्रेडागम एव गृह्यत इति पक्षे त्वित्यपि बोध्यम्।

'यमो गन्धने' विभाषोपयमने' इत्येते सिचः कित्त्वविधायके। **यदेति**। **गन्धनं—सूचनम्**। **उपयमनं—स्वीकारः**। **गन्धनाङ्गमिति** बहुव्रीहिः। तत्र गन्धनपूर्वकस्वीकरणे यदि कित्त्वविकल्पः, ततः प्राप्तविभाषेत्यर्थः।

वोभयत्र ? मन्थने [ १ । २ । १५ ] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । अप्राप्ते । गन्धन इति निवृत्तम् ।

**अनुपसर्गाद्वा [ १ । ३ । ४३ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'वृत्तिसर्गतायनेषु क्रमः' [ १ । ३ । ३८ ] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । अप्राप्ते । वृत्त्यादिष्विति निवृत्तम् ।

**विभाषा वृक्षमृगादीनाम् [ २ । ४ । १२ ] ॥**

प्राप्ते,अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र? 'जातिरप्राणिनाम्' [२।४।६] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । अप्राप्ते । 'जातिरप्राणिना'मिति निवृत्तम् ।

**उषविद्जागृभ्योऽन्यतरस्याम् [ ३ । १ । ३८ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? प्रत्ययान्तादिति† वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ।

प्र०—प्रतिषेधेऽप्राप्ते । परविप्रतिषेधे तूभयत्र वेति संन्देहः । **जातिरिति** । चर्मादिमयास्तदा मृगादयो ग्राह्याः । **निवृत्तमिति** । तन्निवृत्तौ च गौणत्वाच्चर्मादिमयानामग्रहणम् ।

**प्रत्ययान्तादिति वेति** । कथं पुनः प्रत्ययान्ताः शब्दा रूपान्तरयुक्ता उषादिव्यपदेशं लभन्ते ? उच्यते—'सनाद्यन्ता धातव' इत्यस्य यदाऽयमर्थो व्याख्यायते—'धातवः सनाद्यवयवा भवन्ति धातूनामन्तावयवाः सनादयो भवन्ति, यथा समासान्ताष्टजादयः', तदा पूर्वोक्तचोद्याऽभावः ।

उ०—परभूतासु 'दीपजने'ति भिन्नासु अप्राप्तविभाषासु पूर्वविषयनिवृत्तिः पूर्वविप्रतिषेधाङ्गीकारश्चाऽप्राप्तविभाषात्वे बीजमिति बोध्यम् ।

'**वृत्तिसर्गे**'त्यात्मनेपदविधायकम् । ननु मृगादीनां प्राणित्वा'दप्राणिनामिति नित्येप्राप्ते' इत्ययुक्तम्, मृगादिविषये एव च निसंशयत्वादत आह—**चर्मादीति** ।

**प्रत्ययान्ता इति** । प्रत्ययः सनादिरन्तावयवो येषामित्यर्थः । उषादयश्च तदेकदेशा, न प्रत्ययान्तरूपा इति भावः ।

**संज्ञासंज्ञिसंबन्धार्थ इति** । अत एव क्यजाद्यन्तानां संज्ञासिद्धिः । आवृत्तौ तु गौरवमिति भावः । केचित्तु—प्रत्ययान्ता'दित्यनुवृत्तौ उषादिभ्यः कर्तृक्विबन्त प्रकृतिकाचारक्विबन्तेभ्य एव स्यादिति प्राप्ते विभाषा, तन्निवृत्तौ पूर्वविप्रतिषेधेऽप्राप्तविभाषा । निवृत्तौ परविप्रतिषेधे उभयत्रेति भाष्याशयः । प्रत्ययान्ता धात्वन्तरा-

† ३ । १ । ३५

अप्राप्ते । प्रत्ययान्ता धात्वन्तराणि ।

**दीपादीनां विभाषा [ ३ । १ । ३८ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'भावकर्मणोः' [ ३ । १ । ६६ ] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । अप्राप्ते । कर्तरीति हि वर्तते‡ । एवमपि सन्देहो 'न्याय्ये वा कर्तरि, कर्मकर्तरि वे'ति । नास्ति सन्देहः । सकर्मकस्य कर्ता कर्मवद्भवत्यकर्मकाश्च दीपादयः । अकर्मका अपि वै सोपसर्गाः सकर्मका भवन्ति । कर्मोपदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियाणां वा भवन्ति, कर्तृस्थभावकाश्च दीपादयः ।

**विभाषाऽग्रेप्रथमपूर्वेषु [ ३ । ४ । २४ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'आभीक्ष्ण्ये' [ ३ । ४ । २२ ] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । अप्राप्ते । 'आभीक्ष्ण्ये' इति निवृत्तम् ।

**तृन्नादीनां विभाषा [ ६ । २ । १६१ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं

---

प्र०—**प्रत्ययान्ता इति** । 'सनाद्यन्ता धातव' इत्ययं योगः संज्ञासंज्ञिसम्बन्धार्थ इति भावः ।

**भावकर्मणोरिति वेति** । '**चिण्भावकर्मणो**'रित्यत्र सूत्रे यदि दीपजनेत्येतत्सूत्रमनुवर्त्य वाक्यभेदेन संबन्धः क्रियते पृथक्पाठसामर्थ्यात्तदा प्राप्तविभाषा । अथ नानुवर्तते परविप्रतिषेधश्च, तदाऽप्राप्तविभाषा । पूर्वविप्रतिषेधे तूभयत्र विभाषेति संशयः । **अकर्मकाश्चेति** । यद्यपि बुधिः सकर्मकस्तथापि एकपरिहारोपन्यासार्थमविशेषेणैतदुक्तम् । **सोपसर्गा इति** । अर्थान्तरवृत्तित्वात्, अनुभवतिवदिति भाव । **कर्तृस्थभावकाश्चेति** । 'अचः कर्तृयकी'त्यत्र 'जायते स्वयमेवे'त्युदाहृतं, तस्य ण्यर्थवृत्तित्वात्कर्मस्थभावकत्वमिति नास्ति तेनाऽस्य विरोधः ।

**आभीक्ष्ण्य इति निवृत्तमिति** । पूर्वविप्रतिषेधश्चेति भावः ।

**तृन्नादीनामिति** । 'आक्रोश' इत्यत्र यद्यचकौ नानुवर्तेते, ततोऽयं संशयः ।

---

उ०—**णीति** । अस्यायं भावः—हलन्तेभ्य आचारक्विपोऽनभिधानमेव । इतरप्रत्ययान्तास्तु नोधादय इत्यप्राप्तविभाषात्वमेवेति वदन्ति ।

**एकपरिहारः**—कर्मस्थभावकत्वाऽभावरूपः । ननु कर्तरीत्यनुवृत्तिर्व्यर्था, कर्मणि, भावे, कर्मकर्तरि च परत्वाच्चिण्भावकर्मणोरित्यस्य प्रवृत्तेरिति चेन्न, विप्रतिषेधलभ्यार्थस्यैव स्फुटत्वाय अनुवृत्त्या प्रदर्शनादिति दिक् ।

**तृन्नादीनामिति** । 'आक्रोशे च' 'संज्ञायां' 'विभाषा तृन्नन्नतीक्ष्णशुचिष्वि'ति सूत्रे इत्यर्थः । **यद्यचका-**

---

‡ ३ । १ । ४८

वोभयत्र ? 'आक्रोशे' [ ६ । २ । १५८ ] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । अप्राप्ते । 'आक्रोशे' इति निवृत्तम् ।

**एकहलादौ पूरयितव्येऽन्यतरस्याम् [ ६ । ३ । ५९ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'उदकस्योदः संज्ञायाम्' [ ६ । ३ । ५७ ] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । अप्राप्ते । 'संज्ञाया'मिति निवृत्तम् ।

**श्वादेरिञि, पदान्तस्यान्यतरस्याम् [ ७ । ३ । ८, ९ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'इञी'ति वा नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते, उभयत्र वेति । अप्राप्ते । 'इञी'ति निवृत्तम् ।

**सपूर्वायाः प्रथमाया विभाषा [ ८ । १ । २६ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः । कथंच प्राप्ते कथं वाऽप्राप्ते, कथं वोभयत्र ? 'चादिभिर्योग'+ इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । अप्राप्ते । 'चादिभिर्योग' इति निवृत्तम् ।

**ग्रो यङ्यचि विभाषा [ ८ । २ । २०, २१ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'यङीति' वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र

---

**प्र०—एकहलादाविति** । पूरयितव्यस्य चास्ति संज्ञा—'उदपान'मिति ।

**चादिभिरिति** । प्रतिषेधस्याऽप्राप्तविभाषा स्थाप्यते, विधेस्तु प्राप्तविभाषैव ।

**यङीति वेति** । यङ्लुकि कृतेऽजादिः पर संभवति—निजेगिल इति । अत्र च पचाद्यचि कृते 'यङोऽचि चे'ति यङ्लुक् ।

---

उ०—**विति** । 'अष्कावशक्ता'वित्यतः । तदनुवृत्तौ तु निःसन्देहमप्राप्तविभाषेति भावः । एतद्भाष्यविरोधाच्च तत्राष्कावित्यनुवृत्तिपरा ग्रन्था अयुक्ता एवेति तात्पर्यम् ।

**यङ्लुकीति** । 'अचि विभाषे'त्यत्र 'यङी'ति वर्त्तते । तत्रोभयोर्यङजाद्योरव्यवहितपरत्वाऽसंभवात् अतस्याचीत्यस्य परविशेषणत्वं 'यङी'ति विषयसप्तमी । अचि परे यङ्विषये रेफस्य लत्वमित्यर्थः । यत्र विभाषारम्भसाम्र्थ्याद्यङ्लुकः पूर्वं 'ग्रो यङी'ति न भवति । 'नलुमते'ति निषेधाऽनित्यत्वेन पृथग्लोपेन स्थानिवद्भावेन वा यङ्विषय इति प्राप्तविभाषात्वोपपत्तिः । 'यङी'त्येतन्निवृत्तौ विभाषाया असिद्धत्वादेव नित्यं लत्वम् । समुदायलुक्यपि 'न लुमते'ति निषेधाच्च तत्प्राप्तिरित्यप्राप्तविभाषात्वोपपत्तिः । उभयत्रविभाषात्वे त्वियमनुपपत्तिः—'ग्रो यङी'त्येतत्प्रति 'प्रकरणे प्रकरणमसिद्ध'मिति विभाषाया असिद्धत्वाऽभावः । लुकः

---

+ ८ । १ । २४

वेति । अप्राप्ते । 'यङी'ति निवृत्तम् ।

**प्राप्ते च ॥ २१ ॥**

इत उत्तरं या विभाषा अनुक्रमिष्यामः प्राप्ते ता द्रष्टव्याः । त्रिसंशयास्तु भवन्ति प्राप्ते, अप्राप्ते, उभयत्र वेति ।

**विभाषा विप्रलापे [ १ । ३ । ५० ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'व्यक्तवाचाम्' [ १ । ३ । ४८ ] इति वा नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते, उभयत्र वेति । प्राप्ते । 'व्यक्तवाचा'मिति हि वर्तते ।

**विभाषोपपदेन प्रतीयमाने [ १ । ३ । ७७ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'स्वरितञितः' [ १ । ३ । ७२ ] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । प्राप्ते । 'स्वरितञितः'इति हि वर्तते ।

**तिरोऽन्तर्धौ, विभाषा कृञि [ १ । ४ । ७१, ७२ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'अन्तर्धा'विति वा नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते, उभयत्र वेति । प्राप्ते । अन्तर्धाविति हि वर्तते ।

**अधिरीश्वरे, विभाषा कृञि [ १ । ४ । ९७, ९८ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? अधिरीश्वर इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । प्राप्ते । 'ईश्वर' इति हि वर्तते ।

---

प्र०—**प्राप्ते चेति** । प्रकृतानुवृत्त्या प्राप्तविभाषा व्यवतिष्ठते ।

**अन्यत्र वेति** । 'विप्रवदन्ति शकुनय' इत्यत्र पूर्वविप्रतिषेधश्च यदीति भावः ।

**विभाषोपपदेन प्रतीयमाने इति** । कर्त्रभिप्राये क्रियाफले विषये आत्मनेपद भवतीत्येवं प्राप्तविभाषा व्यवतिष्ठते । अथ तु तदर्थद्योतनायात्मनेपद क्रियते, तदोपपदेनैव द्योतितत्वादप्राप्त-विभाषा स्यात् ।

---

उ०—पूर्वं यङीत्यस्य न प्रवृत्तिः, 'अन्तरङ्गानपी'ति न्यायेन लुकस्तत्प्रयोजकाऽप्रत्ययस्य च पूर्वं प्रवृत्तेः । न च लुकि 'न लुमते'ति निषेधेन यङ्परत्वाऽभावात् 'ओ यङी'त्यस्याऽप्राप्तेः कथमुभयत्रविभाषात्वमिति वाच्यं, दत्तोत्तरत्वादिति दिक् ।

**अथत्विति** । तथा च स पक्ष एतद्भाष्यविरुद्ध इति भावः । वस्तुतो द्योतकत्वपक्षेऽपि 'व्यतिलुनीते' 'गार्ग्यायणी'त्यादौ द्योतकसमुच्चयस्य, 'द्वा'वित्यादौ द्योतकवाचकसमुच्चयस्य च दृष्टत्वेनाऽप्राप्यात्मनेपदप्राप्ति-रस्तीति प्राप्तविभाषा सूपपादेति चिन्त्यमेतत् ।

दिवस्तदर्थस्य, विभाषोपसर्गे [ २ । ३ । ५८, ५९ ] ॥

प्राप्तेऽप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? तदर्थस्येति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । प्राप्ते । 'तदर्थस्ये'ति हि वर्तते ।

उभयत्र च ॥ २२ ॥

इत उत्तरं या विभाषा अनुक्रमिष्यामः उभयत्र ता द्रष्टव्याः । त्रिसंशयास्तु भवन्ति । प्राप्ते, अप्राप्ते, उभयत्र वेति ।

हृक्रोरन्यतरस्याम् [ १ । ४ । ५३ ] ॥

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' [ १ । ४ । ५२ ] इति वा नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते, उभयत्र वेति । उभयत्र । प्राप्ते तावत्— अभ्यवहारयति सैन्धवान्, अभ्यवहारयति सैन्धवैः । विकारयति सैन्धवान्, विकारयति सैन्धवैः । अप्राप्ते—हरति भारं देवदत्तः, हारयति भारं देवदत्तम्, हारयति भारं देवदत्तेन । करोति कटं देवदत्तः, कारयति कटं देवदत्तम्, कारयति कटं देवदत्तेन ।

न यदि, विभाषा साकाङ्क्षे [ ३ । २ । ११३, ११४ ] ॥

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'यदी'ति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । उभयत्र । प्राप्ते तावत्—अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामः । यत्कश्मीरेष्ववसाम । यत्तत्रौदनं भोक्ष्यामहे । यत्तत्रौदनमभुञ्ज्महि । अप्राप्ते—अभिजानासि देवदत्त कश्मीरान् गमिष्यामः । कश्मीरानगच्छाम । तत्रौदनं भोक्ष्यामहे । तत्रौदनमभुञ्ज्महि ।

प्र०—गतिबुद्धीति । तत्र विपूर्वो हरतिर्गत्यर्थोऽभ्यवपूर्वः प्रत्यवसानार्थः । करोति क्वचिदकर्मकः । यथा—विकुर्वते सैन्धवा' इति ।

यदीति वेति । प्रतिषेधे प्राप्ते इत्यर्थः । लृट् तु यदि प्रतिषिद्धः ।

उ०—भाष्ये—गतिबुद्धीति नित्ये प्राप्ते इति । नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति भावः । तत्र विपूर्व इति । 'विहरति ग्राम'मित्यादौ गच्छतीत्यर्थोऽवगमादिति भावः । भाष्ये—अप्राप्ते हरति भारमिति । ननु गत्यर्थत्वादस्यापि प्राप्तिरस्त्येवेति चेन्न । प्रापणार्थत्वेऽपि गत्यर्थत्वाऽभावस्य 'न गती'ति सूत्रे वक्ष्यमाणत्वात् ।

१—'तत्रौदनान्' इति पाठान्तरम् ।

## विभाषा श्वेः [ ६ । १ । ३० ] ॥

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? कितीति† वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । उभयत्र । प्राप्ते तावत्–शुशुवतुः शुशुवुः, शिश्वयतुः शिश्वियुः । अप्राप्ते—शुशाव शुशविथ, शिश्वाय शिश्वयिथ ।

## विभाषा संघुषास्वनाम् [ ७ । २ । २८ ] ॥

संपूर्वाद्घुषेः—प्राप्ते ऽप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'घुषिरविशब्दने [ ७ । २ । २३ ] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्रवेति । उभयत्र । प्राप्ते तावत्—संघुष्टा रज्जुः, संघुषिता रज्जुः । अप्राप्ते—संघुष्टं वाक्यमाह, संघुषितं वाक्यमाह‡ ।

आङ्पूर्वात्स्वनेः—प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'मनसी'ति+ वा नित्ये प्राप्ते, अन्यत्र वा अप्राप्ते, उभयत्र वेति । उभयत्र । प्राप्ते तावत्–आस्वान्तं मनः, आस्वनितं मनः । अप्राप्ते–आस्वान्तो देवदत्तः, आस्वनितो देवदत्त इति ॥ ४४ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य
प्रथमे पादे षष्ठमाह्निकम् ॥ ६ ॥

---

प्र०—दैवयज्ञीत्यादि न विचारितं, तस्मादिङ्मात्रप्रदर्शनार्थं कृतम् ॥ ४४ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे प्रथमाध्यायस्य
प्रथमे पादे षष्ठमाह्निकम् ॥ ६ ॥

---

उ०—दैवयज्ञीत्यादिति । 'अनार्षयो'रित्यनुवृत्त्यादिनाऽत्रापि सन्देहसंभव इति भावः । आदिना 'विभाषा पुरुषे' इति ।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्द्योते प्रथमस्याध्यायस्य
प्रथमे पादे षष्ठमाह्निकम् ॥ ६ ॥

---

† ६ । १ । १५   ‡ 'आहे'ति क्वचिन्न ।   + ७ । २ । १८

मात्रमेतद्भवति । नह्यनुच्चार्य शब्दं लिङ्गं शक्यमासङ्क्तुम् । एवं तर्ह्यादेशे तल्लिङ्गं करिष्यते तत्प्रकृतिमास्कन्त्स्यति ।

यदि नियमः क्रियते यत्रैका षष्ठी अनेकं च विशेष्यं तत्र न सिध्यति । अङ्गस्य हलः अणः संप्रसारणस्येति‡ । हलपि विशेष्योऽणपि विशेष्यः, संप्रसारणमपि विशेष्यम् । असति पुनर्नियमे कामचार एकया षष्ठ्याऽनेकं विशेषयितुम् । तद्यथा—देवदत्तस्य पुत्रः पाणिः कम्बल इति । तस्मान्नार्थो नियमेन । ननु चोक्तम्—एकशतं षष्ठ्यर्था यावन्तो वा सन्ति ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्तीति । नैष दोषः, यद्यपि लोके बहवोऽभिसंबन्धा आर्था यौना मौखाः स्रौवाश्चेति । शब्दस्य तु शब्देन कोऽन्योऽभिसंबन्धो भवितुमर्हति—अन्यदतः स्थानात् । शब्दस्यापि शब्देनानन्तरादयोऽभिसंबन्धाः । अस्तेर्भूर्भवतीति+ संदेहः स्थानेऽनन्तरे समीप इति । सन्देहमात्रमेतद्भवति, सर्वसन्देहेषु चेदमुपतिष्ठते—'व्याख्यानतो विशेषप्रति-

---

प्र०—भवतु, लिङ्गासङ्गस्त्वनुच्चारितस्य कथं स्यादित्यर्थः । एवंतर्हीति । आदेशे लिङ्गासङ्गात्तस्य च षष्ठ्यभावात्तत्सम्बद्धस्थानिनो लिङ्गकार्यं फलिष्यतीत्यर्थः ।

यदीति । अङ्गस्येति । स्थानषष्ठीत्वाद्विशेषणविशेष्यभावो न प्रकल्पत इत्यर्थ. । देवदत्तस्येति । संबन्धसामान्यमुपक्रम्यते पश्चात्पदान्तरसन्निधानाद्विशेषावसाय. ।

स्थान इति । अन्तरङ्गत्वाल्लक्ष्यापेक्षणाच्चेति भावः ।

---

उ०—उच्चरित एव प्रत्यायक इत्यणुदित्सूत्रस्थभाष्यविरुद्धमिदम् । तस्माद्बोद्धुरनुमानपूर्वकमुच्चारणं नत्वाचार्यस्येत्यर्थः । शास्त्रप्रणयनकालिकतत्कृतलिङ्गासङ्ग एवैतच्छास्त्रप्रवृत्त्युपयोगी नान्यकृतोऽतिप्रसङ्गात् । पाणिनिना त्वनुच्चारणाच्छास्त्रप्रणयनकाले लिङ्गासङ्गः कर्त्तुमशक्य इति भावः । भाष्ये—संप्रत्ययमात्रमिति । स्वरितत्वबलात्स एवोत्तरत्रेति ज्ञानमात्रमाचार्यकृतमित्यर्थः । आसङ्क्तुमित्यस्य—आचार्येणेति शेषः ।

यदिनियम इति । स्थाननिमित्तसंबन्धार्थकत्वनियम इत्यर्थः । अनेकं विशेष्यं—प्रसङ्गरूपमवयवरूपं च । तत्राद्यं 'शा हा'वित्यादौ, अन्त्यं तु भाष्ये एव वक्ष्यति । तत्र न सिध्यतीति । अवयवादिनिमित्तसंबन्धार्थकत्वं न सिध्यतीत्यर्थः । अणपीति । हल इति सूत्रे तृतीये दीर्घव्यावृत्त्यर्थमण्ग्रहणस्याऽपि संबन्धादिति भावः । तत्र'लोऽन्त्यस्ये'त्येकवाक्यतयाऽङ्गावयवाद्धलः परं यदङ्गान्त्यावयवाण्रूपसंप्रसारणं तस्य दीर्घ इति सूत्रार्थः । तत्राङ्गस्येत्यस्य 'शा हा'वित्यादौ स्थानषष्ठीत्वे हलादिनिरूपितमवयवषष्ठीत्वं न सिध्येदित्यर्थः । स्थानेति । तत्त्वाद्धल इत्यादिनाऽवयववाचकेन विशेषणविशेष्यभावो न स्यादित्यर्थः । विशेषावसाय इति । तत्तदन्वय्यर्थकपदकल्पनयेति भावः । आर्थाः—स्वस्वामित्वादयः । यौनाः—पितृत्वादयः । मौखाः—गुरुशिष्यभावादयः । स्रौवाः—ऋत्विक्त्वादयः । स्थानेऽनन्तरे इत्यादि । स्थानादिरूपसंबन्धिसन्देह इत्यर्थः । आनन्तर्यमव्यवधानम् । सामीप्यं—साधारणम् ।

अन्तरङ्गत्वादिति । स्थानशब्दोऽर्थवाची प्रसङ्गवाची वोभयथाप्यन्तरङ्गत्वम् । 'स्थानिवदादेश'

---

‡ ६ । ४ । १;२; ६ । ३ । १११; १३६ + २ । ४ । ५२

पत्तिर्नहि सन्देहादलक्षण'मिति । स्थान इति व्याख्यास्यामः ।

न तर्हीदानीमयं योगो वक्तव्यः ? वक्तव्यश्च । किं प्रयोजनम् ? षष्ठ्यन्तं स्थानेन यथा युज्येत, यतः षष्ठ्युच्चारिता । किं कृतं भवति ? 'निर्दिश्यमानस्यादेशा भवन्ती'त्येषा परिभाषा न कर्तव्या भवति ॥ ४९ ॥

## स्थानेऽन्तरतमः । १ । १ । ५० ॥

किमुदाहरणम् 'इको यणचि' [ ६ । १ । ७७ ] । दध्यत्र मध्वत्र । तालुस्थानस्य तालुस्थानः, ओष्ठस्थानस्य ओष्ठस्थानो यथा स्यात् । नैत-

---

प्र०—**यतः षष्ठीति** । तेन 'पादः प'दित्यस्याऽयमर्थः–पादन्तस्याङ्गस्य योऽवयवः पाच्छब्दः सूत्रे षष्ठ्या निर्दिष्टस्तस्य पच्छब्द आदेशो भवति, न तु प्रतीयमानस्य पादन्तस्य । अस्यैव सूत्रस्य 'निर्दिश्यमानस्यादेशा भवन्ती'त्ययमर्थः । षष्ठीति षष्ठ्यन्तं गृह्यते तेन षष्ठ्यन्तमेव निर्दिश्यमानं स्थानेन युज्यते, न तु प्रतीयमानमित्यर्थः । अलोऽन्त्यस्याऽऽदेः परस्येत्येतत्तु वचनसामर्थ्यान्न बाध्यते ॥ ४९ ॥

**स्थाने** । **किमुदाहरणमिति** । कचिल्लक्षणान्तरेणेष्टं सिद्धमिति प्रश्नः । **इको यणचि** । **दध्यत्रेति** । अस्य सूत्रस्य लक्षणमप्युदाहरणं प्रयोगोऽपीत्युभयोपन्यासः । इको ह्रस्वादिभेदात् षट्षष्टिर्यणस्तु सप्तेति वैषम्यात्संख्यातानुदेशो न सिद्ध्यतीत्यर्थः । **नैतदस्तीति** । प्रत्याहारपाठे

---

उ०—इति ज्ञापकमप्यत्र बोध्यम् ।

**निर्दिश्यमानमिति** । उच्चार्यमाणमित्यर्थः । निर्दिश्यमानं षष्ठ्यन्तमेवेत्यन्वयः । निर्दिश्यमानपदस्य चाऽध्याहार इति भावः । **न बाध्यते इति** । किंतु स्वव्यवस्थापकत्वेनाश्रीयत इत्यर्थः । एवमनेकाल्सूत्रे सर्वोऽप्येतत्परिभाषाबोधित एव गृह्यते । 'पद्दन्' इत्यादावपि आदेशैः पाणिनिकृतस्थान्युच्चारणानुमानाद्व्यवस्थार्थत्वाद्वा न दोषः । यत्त्वलोन्त्यस्यादेः परस्येत्यमू एतद्बाधकाविति तत्तु उदस्थादिति पादःपदिति सूत्रस्थभाष्यविरुद्धम् । व्यवस्थापकत्वे संभवति बाधकत्वकल्पनानौचित्यप्रसक्तं च ॥ ४९ ॥

**स्थानेन्त** । इति **प्रश्नइति** । एवंच परोक्तोदाहरणदूषणायाऽयं प्रश्नो, नतूदाहरणाऽसंभवकृत इति भावः । उदाहरणप्रश्ने इकोयणचीत्यस्योल्लेखो व्यर्थोऽत आह—**अस्य सूत्रस्येति** । सामान्यतो ज्ञातस्य विशेषाकारेण यत्र प्रतिपत्तिस्तदुदाहरणमिति भावः । **षट्षष्टिरिति** । लृवर्णस्य दीर्घाऽभावात् । दीर्घप्लुतऋकारस्य प्लुतऋकारस्य चाऽनुनासिकस्याऽदर्शनादिदं चिन्त्यम् । **सप्तेति** । रेफस्य सानुनासिकस्याऽभावादिति भावः । इदं चिन्त्यम् । अणुदित्सूत्रेऽण्ग्रहणसामर्थ्येन यणांशे गुणाभेदकत्वस्यैव न्याय्यत्वेन विधीयमानत्वेन च तेषामग्रहणात् । तत्प्रत्याख्यानेऽपि आरम्भप्रत्याख्यानयोः फलाऽभेदाय भेदकत्वस्यैवाश्रयणेन तेषामग्रहणम् । अत एव मतोर्मस्य नानुनासिको वकार इति । **सङ्ख्यातानुदेशः**–क्रमेणान्वयः । **शब्दत इति** । अयं भावः—यथा'स्यतासी लृलुटो'रित्यत्रार्थवैषम्येऽपि बोधकशब्दसाम्याद्यथासङ्ख्यम्, तथा इक्पदयण्पदाभ्यामनेकोपस्थितावपि बोधकशब्दसाम्यमस्त्येवेति न दोष इति । न च ऋकारे लकारस्य लृकारे रेफस्य चापत्तिः, ऋदिल्लृदितोर्भेदेन निर्देशात् सावर्ण्याऽनित्यत्वेनात्र ऋलृभ्यां न ऋकारलृकारयोरयोर्ग्रहणमिति नोक्तदोष इति तदाशयात् । ननु लृकारोदाहरणाऽभावात्कथं यथासङ्ख्यमत आह–**वस्त्वेति** । वस्तुतः प्रतिपत्तिकालिकं सङ्ख्या-

दस्ति । संख्यातानुदेशेनाप्येतत्सिद्धम् × ।

इदं तर्हि 'तस्थस्थमिपां तांतंतामः' [ ३ । ४ । १०१ ] इति । एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो, बह्वर्थस्य बह्वर्थो यथा स्यात् । ननु च एतदपि संख्यातानुदेशेनैव सिद्धम् ।

इदं तर्हि—'अकः सवर्णे दीर्घः' [ ६ । १ । १०१ ] इति । दण्डाग्रम्, क्षुपाग्रम्, दधीन्द्रः, मधूष्ट्र इति कण्ठस्थानयोः कण्ठस्थानस्तालुस्थानयोस्तालुस्थान ओष्ठस्थानयोरोष्ठस्थानो यथा स्यादिति ।

अथ स्थान इति वर्तमाने पुनः स्थानग्रहणं किमर्थम् ? यत्राऽनेकविधमान्तर्यं तत्र स्थानत एवान्तर्यं बलीयो यथा स्यात् । किं पुनस्तत् ? चेता स्तोता । प्रमाणतो-ऽकारो गुणः प्राप्नोति, स्थानत एकारौकारौ । पुनः—स्थानग्रहणादेकारौकारौ भवतः ।

---

प्र०—शब्दतः साम्यमस्तीति भावः । 'घस्लादेश' इत्यादौ लकारोऽपि लृकारस्यादेशो दृश्यत इति लृकारस्य स्थानित्वाऽभावो नाशङ्कनीयः ।

एकार्थस्येति । सादृश्यहेतुधर्मोपलक्षणमेतत् । तेन प्रत्यक्त्वादयोऽपि धर्मा गृह्यन्ते ।

यत्रानेकमिति । स्थानग्रहणेऽनुवर्तमाने वाक्यभेदः क्रियते, स्थानेऽन्तरतमो भवति, यत्र चाऽनेकमान्तर्यमस्ति तत्र स्थानकृतमेवान्तर्यमाश्रीयत इति । वाक्यभेदस्य च तमब्ग्रहणमेव लिङ्गम् । स्थानकृत एव हि सादृश्ये गृह्यमाणे सादृश्यान्तरपरित्यागात्तमग्रहणमनर्थकमेव स्यात् ।

---

उ०—साम्यमेव यथासङ्ख्यप्रवृत्तौ नियामकम्, न तु लक्ष्यसंस्कारकालिकमपीति प्रत्याहाराह्निके भाष्ये स्पष्टत्वान्नायं दोष इति बोध्यम् । अनुनासिकस्थाने सानुनासिकार्थमपि न तत्रैतदुपयोगः । विधेयेऽपि गुणभेदकपक्षस्यैव सत्त्वेन तत्र तदप्राप्तेः ।

आदेशानां तत्स्थानापन्नत्वेन न तदर्थत्वम्, किंतु स्वभावत एव, शब्दार्थसंबन्धाना नित्यत्वादित्याशयेन भाष्ये—एकार्थं इति । तावन्मात्रोक्तौ तसस्तमपि प्राप्नोति, थसस्तामपीत्यत आह—साम्यस्येति । उत्तमे प्रत्यक्त्वरूपोऽहंकारास्पदचेतनधर्मः, मध्यमे अहंकारानास्पदचेतनधर्मः पराक्त्वम् । प्रथमे त्वनियतम् ।

भाष्ये—अनुवर्तमाने इति । एकदेशे स्वरितत्वप्रतिज्ञानादिति भावः । वाक्यभेद इति । अनुवृत्तप्रसङ्गवाचिस्थानशब्देनैकं वाक्यम्, तात्वादिवाचीहत्यस्थानशब्देनाऽपरम् । अत्र च 'स्थाने' इति तृतीयार्थे सप्तमीति भावः । तमग्रहणमनर्थकमिति । प्रसङ्गे स्थानकृतान्तर्यवानित्यर्थेनैव सिद्धे स्थानेग्रहणं न वाक्यभेदे मानमितीदमुक्तम् । तथैकवाक्यतायां तु स्थानकृतान्तर्याऽभावे'तद्वसती'त्यादावव्यवस्थैव स्यात् । वाक्यभेदे तु सादृश्यान्तरमादाय तत्र व्यवस्थेति भावः ।

---

× १ । ३ । १०

अथ तमब्ग्रहणं किमर्थम् ? 'झयो होऽन्यतरस्याम्' [ ८ । ४ । ६२ ] इत्यत्र 'सोष्मणः सोष्माणः' इति द्वितीयाः प्रसक्ताः, 'नादवतो नादवन्तः' इति तृतीयाः । 'तमब्ग्रहणाद्ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः—वाग्घसति त्रिष्टुब्भसतीति ।

किमर्थं पुनरिदमुच्यते ?

**स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च सर्वप्रसङ्गस्तस्मात्स्थानेऽन्तरतमवचनं [ नियमार्थम् ] ॥ १ ॥**

स्थान्येकत्वेन निर्दिश्यते—अक इति । अनेकश्च पुनरादेशः प्रतिनिर्दिश्यते—दीर्घ इति । 'स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च सर्वप्रसङ्गः' । सर्वे सर्वत्र प्राप्नुवन्ति । इष्यते चान्तरतमा एव स्युरिति, तच्चान्तरेण यत्नं न सिध्यति, 'तस्मात्स्थानेऽन्तरतम इति वचनं नियमार्थम्' । एवमर्थमिदमुच्यते ।

अस्ति प्रयोजनमेतत् । किं तर्हीति ।

यथा पुनरियमन्तरतमनिर्वृत्तिः सा किं प्रकृतितो भवति—स्थानिन्यन्तरतमे षष्ठीति । आहोस्विदादेशतः—स्थाने प्राप्यमाणानामन्तरतम आदेशो भवतीति ?

---

प्र०—**सोष्मण इति** । ऊष्मत्वगुणयुक्तस्येत्यर्थः । **तमग्रहणादिति** । ईषत्सदृशेऽपि लोके सदृशव्यवहारदर्शनादिह तमग्रहणं कृतम् ।

**किमर्थमिति** । यदीदं नोच्येत तदा किं स्यादिति प्रश्नः ।

**स्थानिन इति** । यद्यपि 'अकः' इत्यनेन स्थानिनो बहव उपात्तास्तथापि प्रयोगे एकैकः स्थानी, तस्य पर्यायेण बहवो दीर्घा आदेशाः प्राप्नुवन्तीत्यर्थः ।

**यथा पुनरिति** । येन प्रकारेण—संहितापाठलक्षणेनेत्यर्थः । प्रतिसूत्रं तु विच्छिद्य पाठे संशयाऽभावः। 'पदप्रकृतिः संहिते'ति संहिताया एव नित्यत्वात्तत. पदाऽपोद्धारे क्रियमाणेऽन्तरतम-

---

उ०—**ऊष्मत्वेति** । सहशब्दप्रयोगोपपत्तये धर्मपर ऊष्मशब्द इति भावः ।

नन्वनन्यथासिद्धोदाहरणरूपप्रयोजनोक्तेः पुनः प्रश्नानुपपत्तिरत आह—**यदीति** । सूत्राऽभावे किमनिष्टमिति प्रश्नतात्पर्यमिति भावः ।

**बहव इति** । एवंचैकत्वनिर्देशादित्यनुपपन्नमिति भावः । **प्रयोग इति** । 'अक' इत्येतद्बोध्यः स्थानी प्रयोगे एकत्वविशिष्ट उच्चार्यत इति भाष्याक्षरार्थः । यद्यपि 'पूर्वपरयो'रित्युक्ते'रेकः स्थानी'त्ययुक्तम्, तथापि तत्समुदायाभिप्रायेणेदम् । युगपदेककर्तृक सर्वोच्चारणमशक्यमत आह—**पर्यायेणेति** ।

**येन प्रकारेण संहितापाठलक्षणेनेति** । अनेन संहितापाठ एव पूर्वं स्थित इत्युक्तम् । अस्तु तर्हि विच्छिद्य पाठोऽत आह—**पदप्रकृतिरिति** । षष्ठीतत्पुरुषः । बहुव्रीहिरित्यन्ये, तत्प्रकृतग्रन्थाननुगुणम् । भाष्ये—**सा किं प्रकृतित इति** । 'सेती'यमित्यस्य प्रतिनिर्देशः । 'इदं'शब्दोऽपि यच्छब्दार्थः क्वचित्[1] । केचित्तु

---

१ क्वचिन्न ।

कुतः पुनरियं विचारणा ? उभयथाऽपि तुल्या संहिता—'स्थानेऽन्तरतम उरण् रपरः' इति ।

किं चातः ? यदि प्रकृतितः—'इको यणचि' [ ६ । १ । ७७ ] यणां येऽन्तरतमा इकस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्यात्—दध्यत्र मध्वत्र । कुमार्यर्थम् ब्रह्मबन्ध्वर्थमित्यत्र न स्यात् । आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवति ।

तथा 'इको गुणवृद्धी' [ १ । १ । ३ ] गुणवृद्धयोर्येऽन्तरतमा इकस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्यात्—नेता लविता नायको लावकः । चेता स्तोता चायकः स्तावक इत्यत्र न स्यात् । आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवतीति ।

तथा ऋवर्णस्य गुणवृद्धिप्रसङ्गे गुणवृद्ध्योर्यदन्तरतममृवर्णं तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्यात्—कर्ता हर्ता आस्तारकः निपारकः । आस्तरिता निपरिता कारको हारक इत्यत्र न स्यात् । आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां

---

प्र०—शब्द किं सप्तम्यन्तोऽपोद्ध्रियते अथ प्रथमान्त इति प्रश्नः । तत्र सप्तम्यन्तपक्षे 'षष्ठी'ति वर्तते, अन्तरतमो य आदेशस्य स्थानी तत्रैव षष्ठी, यत्रैव षष्ठी तत्रादेश इति प्रकृतिर्नियम्यते । प्रथमान्तपक्षे तु अन्तरतम आदेशो भवतीत्यादेशो नियम्यते ।

इहैवेति । यणाधर्ममात्रिकाणां सदृशा इको मात्रिका न तु दूरविप्रकृष्टा दीर्घा इति भावः । आदेशनियमपक्षे चैतदुदाहरणत्वेन दूषितम् । प्रकृतिनियमपक्षे तु भवत्येवैतदुदाहरणम् ।

चायक इति । 'अचो ञ्णिती'त्यत्रापि अयमेव दोष इत्युपन्यासः ।

ऋवर्णस्येति । ऋकारस्य ह्रस्वस्यैव गुणः स्याद्दीर्घस्यैव च वृद्धिरिति विशेषप्रदर्शनाय

---

उ०—'यथापुन'रिति नेत्ययमेऽव्ययसमुदाय इत्याहुः । अन्तरतमशब्दार्थस्य विशेषणत्वेन या प्रतिपत्तिः सा किं सौत्रस्थानशब्दस्य तिष्ठन्त्यस्मिन्नादेशा इत्यधिकरणव्युत्पत्त्याऽन्तरतमे स्थानिनीत्यर्थात् स्थानिनं प्रति उताऽऽदेशं प्रतीत्यर्थः । षष्ठीति वर्तत इति । अन्तरतमेऽर्थादादेशस्य स्थानिनि षष्ठी उपसंहर्तव्येत्यर्थः । 'यत्रैव षष्ठी'त्यादि तु पर्यवसितार्थकथनम् ।

ननु भाष्ये सङ्ख्यातानुदेशेनैतदुदाहरणस्य दूषितत्वात् पुनरुपन्यासोऽयुक्तोऽत आह—आदेशेति । भवत्येतदिति । दीर्घव्यावृत्तये इत्यर्थः ।

भाष्ये—इको गुणवृद्धी इति विध्येकवाक्यतापन्नस्य खण्ड इति बोध्यम् । नन्विको गुणवृद्धी इत्युक्त्वा 'चायक' इत्युदाहरणमसङ्गतमत आह—अचइति । केचित्तु—'इको यत्र गुणवृद्धी इष्टे, तत्रे'ति भाष्यार्थान्न दोष इत्याहुः ।

ननु ऋकारस्येगन्तर्भावात्पुनरुपन्यासो वृथेत्यत आह—ऋकारस्येति । एवं च सप्तम्यन्तपक्षेदो

सर्वत्र षष्ठी, यत्र षष्ठी तत्रादेश भवन्तीति सर्वत्र सिद्धं भवति ।

अथादेशतोऽन्तरतमनिर्वृत्तौ सत्यामयं दोषः—'वान्तो यि प्रत्यये' [ ६ । १ । ७९ ] । स्थानिनिर्देशः कर्तव्यः । ओकारौकारयोरिति वक्तव्यम्, एकारैकारयोर्माभूदिति । प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां वान्तादेशस्य एक्षु याऽन्तरमा प्रकृतिस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेण स्थानिनिर्देशं सिद्धं भवति ।

आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । कथम् ? वान्तग्रहणं न करिष्यते 'यि प्रत्यये' एचोऽयादयो भवन्तीत्येव । यदि न क्रियते, चेयं जेयमित्यत्रापि प्राप्नोति । 'क्षय्यजय्यौ शक्यार्थे' [ ६ । १ । ८१ ] इत्येतन्नियमार्थं भविष्यति—'क्षिज्योरेवैच' इति । तयोस्तर्हि शक्यार्थादन्यत्रापि प्राप्नोति—क्षेयं पापम्, जेयो वृषल इति । उभयतो नियमो विज्ञास्यते—'क्षिज्योरेवैचः' 'अनयोश्च शक्यार्थ एवे'ति । इहापि तर्हि नियमान्न प्राप्नोति—लव्यम् पव्यम् । अवश्यलाव्यम् अवश्यपाव्यमिति । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः ? यथाजाती-

---

प्र०—ऋवर्णस्य पृथगुपन्यासः ।

वान्तो यीति । 'एच' इत्यनुवर्तनात् सर्वेषां वान्तादेशप्रसङ्गः । यदा त्वेवं व्याख्यायते-'यादृशो वान्त आदेशः पूर्वं दृष्टस्तादृशो यि प्रत्यये भवति, ओकारस्थानिकोऽवादेशो दृष्ट औकारस्थानिकश्चाऽऽवादेश' इति, तदा न दोषः ।

उभयत इति । योगविभागेनेति भावः । इहापीति । सामान्येन नियम इति प्रश्नः । तुल्यजातीयस्येति । कण्ठतालव्यस्येत्यर्थः । रायमिच्छतीति । एकारस्यैव नियमेन व्यावृत्तिः कृता न त्वैकारस्येति प्रश्नः । छान्दस इति । क्यजन्तस्य रैशब्दस्य भाषायां नास्ति प्रयोगोऽन्यत्र

---

उ०—लक्ष्याऽसिद्ध्या दुष्ट इति भावः ।

यादृश इति । 'अची'त्यनुवर्त्याऽचि परतो यस्य यो वान्तो दृष्टस्तस्य यि प्रत्यये स इति व्याख्येयमित्यर्थः । अन्ये तु वाच्यवृत्त्येदृशार्थस्याऽलाभाद्यि प्रत्यये इति दृष्ट्वाऽचीत्यस्याऽसंबन्धाच्च भाष्योक्तं वचनमेव न्याय इत्याहुः ।

भाष्ये क्षिज्योरेवेति । ह्रस्वनिर्देशात्क्षीइति दीर्घान्तस्य, जैजय इत्यस्य च नेदं निपातनमिति बोध्यम् । योगविभागेनेति विनिगमनाविरहाद्ब्रह्मक्षत्रयोरयादाविवोभयतो नियम इत्यन्ये । भाष्ये—तुल्यजातीयस्येति । अन्यथा 'यि प्रत्यये' इति विधिवैयर्थ्यं स्यादिति भावः । तत्त्वं च यत्वेत्वेन, तर्हि ऐकारे आयादेशः स्यादत आह—कण्ठ्येति । भाष्ये एकारग्रहणमुपलक्षणमिति भावः । एतदनभिज्ञः शङ्कते—भाष्ये—रायमिच्छतीति । तदाह—एकारस्यैवेति । एकारस्य तालव्यत्वमेवेति भाष्याशयः । क्यजन्तेति । राः—रैशब्दो, यि यकारादिप्रत्यये इति भाष्यार्थं इति भावः । भाष्ये विसर्गरहित एव पाठः । एतेन रायिरित्युक्तम्, आत्वस्य दुर्लभत्वात्, रैशब्दात्विक् दुर्लभ इत्यपास्तम् । नास्तिप्रयोग इति । अनभिधानादिति भावः । क्यच्चि-

यकः क्ङिज्योरेच् । कथंजातीयकः क्ङिज्योरेच् ? एकारः । एवमपि रायमिच्छति रैयति अत्रापि प्राप्नोति । रायिश्छान्दसः । दृष्टानुविधिश्छन्दसि भवति ।

'ऊदुपधाया गोहः' [ ६।४।८९ ] आदेशतोऽन्तरतमनिर्वृत्तौ सत्यामुपधाग्रहणं कर्तव्यम् । प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यामूकारस्य गोहो याऽन्तरतमा प्रकृतिस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेणोपधाग्रहणं सिद्धं भवति । आदेशतोऽप्य न्तरतम निर्वृत्तौ सत्यां न दोषः । क्रियते एतन्न्यास एव ।

'रदाभ्यां निष्ठा तो नः पूर्वस्य च दः' [ ८ । ४ । ४२ ] । आदेशतोऽन्तरतमनिर्वृत्तौ सत्यां तकारग्रहणं कर्तव्यम् । प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां नकारस्य निष्ठायां याऽन्तरतमा प्रकृतिस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीत्यन्त-

---

प्र०—तु विद्यत एवेति व्याचक्षते । क्वच् त्वैकारान्तान्नास्ति, 'गोसमानाक्षरनान्तात्' इति वचनात् । अन्ये तु भाषायां रैशब्दस्य प्रयोग एव नास्तीत्याहुः ।

**गोह इति** । एतत्परिभाषोपस्थाने सति गोह् इति षष्ठ्यन्तरतमे स्थानिन्युपसंह्रियते । क्रियते **न्यास एवेति** । अन्यथा परत्वादलोऽन्त्यस्येत्यनेन 'गोह्' इति षष्ठ्यन्त्येऽल्युपसंह्रियेतेति भावः ।

**रदाभ्यामिति** । चरितमित्यादौ व्यवधानान्न भवति । '**निष्ठाया**'इति षष्ठ्यास्तकार एवोपसंहारात्तस्यैवानन्तर्येण नत्वविधानात् । **क्रियत एतन्न्यास एवेति** । अन्यथा हि 'भिन्नव-

---

उ०—स्यादिर्वचनादित्यन्तोऽग्रन्थः, तस्यैकीयमतत्वात् । अत एव नः क्ये इति सूत्रे वाच्यतीति भाष्ये प्रयुक्तम् । **अन्येत्विति** । अत्राऽरुचिबीजं तु रायमिच्छतीति भाष्यप्रयोगविरोधः । न हि विग्रहश्छन्द इति बोध्यम् । भाष्ये यीत्यस्य वैयर्थ्याच्च ।

भाष्ये **गोहः**—संबन्धिन ऊकारस्य याऽन्तरतमा प्रकृतिरित्यन्वयः **स्थानिन्युपसंह्रियत इति** । एवं च 'गोह' इति गोहवयवे लाक्षणिकम्—ऊकारान्तरतमस्य गोहवयवस्योदित्यर्थ इति भावः । ननूपधाग्रहणाऽकरणलाघवे दर्शिते **क्रियत** इत्युत्तरमसङ्गतमत आह—**अन्यथेति** । परत्वादलोऽन्त्यस्येत्येव व्यवस्थापकं स्यादित्यर्थः । एवं च पक्षद्वयेऽप्यावश्यकं तदिति भावः ।

ननु'त'ग्रहणाऽभावे चरितमित्यादावपि रेफानन्तरा निष्ठेति नत्वं स्यादत आह—**चरितमिति** । 'रदाभ्या'मित्यस्य प्रधानविशेषणताया न्याय्यतया परिभाषासंस्कृते लक्ष्यसंस्कारके वाक्ये रेफदकाराभ्या परस्य निष्ठासंबन्धिनोऽन्तरतमस्य नकारादेश इत्यर्थ इति भावः । **आदेः परस्य स्थानेऽन्तरतम** इत्याभ्यामादेरन्तरतमस्य न इत्यर्थे इकारस्याऽन्तरतमत्वादभावेन तकारस्य चादित्वाऽभावेनाप्राप्तिरिति **परे** । पक्षान्तरेपि तुल्यत्वान्न गौरवमित्याह—**अन्यथेति** । **दकारस्य नत्वं स्यादिति** । अनया परिभाषयेतिभावः । वस्तुतस्तु 'आदेः परस्ये'त्यनेनाऽन्त्यस्याऽप्राप्तिः । सूत्रं तु उभयाऽविरोधेन भिन्नमित्यादौ चरितार्थमित्यत्र प्रयोगे न स्यादेव नत्वमिति उभाभ्यामपि तग्रहणं कर्त्तव्यमिति भाष्यतात्पर्यम् । एवं च प्रथमान्तच्छेदो निर्दोषः सप्तम्यन्तच्छेदस्तु दुष्ट एव । अत एव 'न भूसुधियो' रित्यादि चरितार्थम् । 'नृनरयोर्वृद्धिश्चे'ति शार्ङ्गरवा-

रेणापि तकारग्रहणं सिद्धं भवति । आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । क्रियत एतन्न्यास एव ।

किं पुनरिदं निर्वर्तकम्—अन्तरतमा अनेन निर्वर्त्यन्ते । आहोस्वित्प्रतिपादकम्—अन्येन निर्वृत्तानामनेन प्रतिपत्तिः ? कश्चात्र विशेषः ?

**स्थानेऽन्तरतमनिर्वर्तके सर्वस्थानिनिवृत्तिः ॥ २ ॥**

स्थानेऽन्तरतमे निर्वर्तके सर्वस्थानिनां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति—दधि मधु । अस्तु, न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते । तत्रान्तर्यतो दधिशब्दस्य दधिशब्द एव, मधुशब्दस्य मधुशब्द एवादेशो भविष्यति । यदि चैवं, क्वचिद्द्वैरूप्यं तत्र दोषः स्यात्—बिसं बिसम्, मुसलं मुसलमिति । 'इणकोरादेशप्रत्यययो'रिति षत्वं प्राप्नोति† ।

---

प्र०—द्ध्या'मित्यत्र दकारस्य नत्वं स्यात् । स हि नकारस्य सुसदृशः, 'यथा तृतीयास्तथा पञ्चमा, इति वचनात् ।

**किंपुनरिति** । किं स्वतन्त्रमिदं लक्षणम्, आहोस्विल्लक्षणान्तरेणाऽभिनिर्वृत्तानामनेन नियमः क्रियते । अथ लक्षणान्तरशेषभूतमिति प्रश्नः ।

**स्थानिनिवृत्तिरिति** । दधिशब्दस्य यदि दधिशब्द आदेशः क्रियते, तदा प्रयोजनाऽभावः । भिन्नरूपस्त्वादेशस्तदर्थस्याऽप्रत्याययक इति शब्दव्यवहारोत्साद एवेति भावः । **अस्त्विति** । वचनसामर्थ्याच्छब्दव्यवहारस्य चाऽनादित्वादिति भावः । **क्वचिद्द्वैरूप्यमिति** । यदा बिसशब्दस्य बिसशब्द आदेशस्तदा षत्वं नास्ति न हि तदा सकार आदेशः । यदा तु सकारस्य सकार आदेशस्तदा षत्वप्रसङ्ग इति वैरूप्यप्राप्तिः । 'अस्तेर्भू'रित्यादयस्तु विशेषविहितत्वादस्य बाधकाः ।

---

उ०—द्यन्तर्गणसूत्रं यद्यार्षं' तदा नरः—अ इति व्याख्यानादाद्याकारस्यैव वृद्धिरिति न तत्र दोषः । तत्र 'नृनरयो'रित्यावर्त्तते, एकत्र पञ्चम्यर्थे षष्ठी । पृथगपि वा तौ गणे पठ्येते इति बोध्यम् ।

**अथेति** । वाक्यभेदाऽभेदाभ्यां पक्षद्वयभेद इति बोध्यम् । तत्र तृतीयः सिद्धान्तो भविष्यति ।

**भिन्नरूप इति** । पर्यायो यद्यपि भिन्न रूपस्तदर्थप्रत्यायकश्च, तथापि विनिगमकाऽभावादुभयोः स्थानित्वमादेशत्वं च वाच्यम् । तथा च सूत्रमनारम्भसमं स्यादिति भावः । शास्त्रप्रवृत्तौ हेतुर्वचनसामर्थ्यम् । सदृशादेशे हेतुः—**शब्देति** । भाष्ये—**यदि चैवमिति** । स्थान्यपेक्षयाऽऽदेशे यत्र वैरूप्यं प्रसक्तं तत्र दोष इत्यर्थः । **नहि तदेति** । आदेशरूपसस्यैव तेन षत्वविधानादिति भावः । **यदात्विति** । तद्ध्वनयन् भाष्यकृद्दर्शयति—**इमे वर्णा इत्यादि** । नन्वस्य निवर्तकत्वे आर्धधातुकेऽप्यस्त्यादीनामस्त्याद्यादेशा स्युरिति कुतो नोक्तम् । किं चाऽनेन सिद्धे तद्वयर्थं चेत्यत आह—**अस्तेरिति** । विद्यतिनिवृत्तिस्तत्फलमिति भावः ।

---

† ८ । ३ । ८७; ५९

अपि चेष्टा व्यवस्था न प्रकल्प्येत । तद्यथा—तप्ते भ्राष्ट्रे तिलाः प्रक्षिप्ता मुहूर्तमपि नावतिष्ठन्ते, एवमिमे वर्णा मुहूर्तमपि नावतिष्ठेरन् ।

अस्तु तर्हि प्रतिपादकम्—अन्येन निर्वृत्तानामनेन प्रतिपत्तिः ।

**निर्वृत्तप्रतिपत्तौ निर्वृत्तिः ॥ ३ ॥**

निर्वृत्तप्रतिपत्तौ निर्वृत्तिर्न सिध्यति । सर्वे सर्वत्र प्राप्नुवन्ति । किं तदुच्यते—निर्वृत्तिर्न सिध्यतीति ? न साधीयो निर्वृत्तिः सिद्धा भवति । न ब्रूमो निर्वृत्तिर्न सिध्यतीति । किं तर्हि ? इष्टा व्यवस्था न प्रकल्प्येत । न सर्वे सर्वत्रेष्यन्ते ।

इदमिदानीं किमर्थं स्यात् ?

**अनर्थकं च ॥ ४ ॥**

अनर्थकमेतत्स्यात् । यो हि भुक्तवन्तं ब्रूयान्मा भुक्था इति, किं तेन कृतं स्यात् ।

---

प्र०—अपिचेति । पुनरन्येनान्येनाऽऽदेशेन भवितव्यमिति भावः । प्रयोजनमन्तरेण प्रवृत्तौ सत्यामसकृदपि प्रवृत्तिः स्यात् । ततश्च सर्वस्य निवृत्त्यभिमुखत्वात्साधुत्वव्यवस्था नोपपद्यते ।

अस्तु तर्हीति । निर्वृत्तेषु लक्षणान्तरेणादेशेषु नियमोऽनेन क्रियते तत्रान्तरतमः साधुर्नान्य इत्यर्थः ।

निर्वृत्तिरिति । *अभिमतस्य शब्दस्येत्यर्थः*। इष्टा व्यवस्थेति । 'अकः सवर्णे दीर्घः' इत्यनेन लक्षणेन यदा सर्वे दीर्घाः कृतास्तदा तेषां साधुत्वं विज्ञातम् । न चाऽनेन तेषामेवाऽसाधुत्वं शक्यं प्रतिपादयितुमिति भावः ।

---

उ०—सदृशादेशविषयेऽपि दोषमाह भाष्ये—अपिचेष्टेति । ननु सदृशादेशे कथमिष्टव्यवस्थासिद्धिरत आह—पुनरिति । ननु 'लक्ष्ये लक्षणस्ये'ति न्यायविरोधोऽत आह—प्रयोजनमिति । सप्रयोजनशास्त्रप्रवृत्तौ हि प्रथमप्रवृत्त्यैव प्रयोजननिष्पत्तेर्न द्वितीयादिप्रवृत्तिरिति तद्बीजम् । नचेदं प्रकृते इति भावः । भाष्ये *व्यवस्थेत्यस्य सापेक्षत्वादाह—साधुत्वस्येति । परिनिष्ठितत्वव्याप्यत्वात्साधुत्वस्येति भावः* । एवं च दोषान्तरमेव शास्त्रं स्यादिति तात्पर्यम् ।

निर्वृत्तेष्विति । अन्येन निर्वृत्तानां मध्येऽनेनाऽन्तरतमस्यैव साधुत्वप्रतिपत्तिरिति भाष्यार्थ इति भावः ।

अभिमतस्येति । शास्त्रप्रामाण्यादुभयोरपि पाक्षिकसाधुत्वापत्त्येति भावः । दीर्घादेरिष्टा व्यवस्थाऽनेन भविष्यतीत्यत आह—अक इति । एकप्रमाणबोधितस्य सामान्यविशेषभावाऽभावेन प्रमाणान्तरेण आत्यन्तिको निरासोऽशक्यः कर्तुमिति भावः ।

ननु शास्त्रप्रामाण्यादुभयोरपि साधुत्वे इदं व्यर्थं स्यादिति पृच्छति—इदमिदानीमिति ।

उत्तरयति—अनर्थकमिति । भुक्था इति निरनुस्वारः पाठः ।

**उक्तं वा ॥ ५ ॥**

किमुक्तम्? 'सिद्धं तु षष्ठ्यधिकारे वचना'दिति‡। षष्ठ्यधिकारेऽयं योगः कर्तव्यः—'स्थानेऽन्तरतमः षष्ठीनिर्दिष्टस्ये'ति।

**प्रत्यात्मवचनं च ॥ ६ ॥**

प्रत्यात्ममिति च वक्तव्यम्। किं प्रयोजनम्? यो यस्यान्तरतमः स तस्य स्थाने यथा स्यात्, अन्यस्याऽन्तरतमोऽन्यस्य स्थाने मा भूदिति।

**प्रत्यात्मवचनमशिष्यं स्वभावसिद्धत्वात् ॥ ७ ॥**

प्रत्यात्मवचनमशिष्यम्। किं कारणम्? 'स्वभावसिद्धत्वात्'। स्वभावत एतत्सिद्धम्। तद्यथा—'समाजेषु समाशेषु समवायेषु चाऽऽस्यता'मित्युक्ते न चोच्यते प्रत्यात्ममिति, प्रत्यात्मं चाऽऽसते।

**अन्तरतमवचनं च ॥ ८ ॥**

अन्तरतमवचनं चाऽशिष्यम्। योगश्चाप्ययमशिष्यः। कुतः? 'स्वभावसिद्ध

---

**प्र०—उक्तं वेति**। 'इको गुणवृद्धी' इत्यत्र। यत्र षष्ठी तत्रेदमुपतिष्ठते, तेनैकवाक्यतानेन सूत्रेण विधिवाक्यानामिति विधानकाल एवाऽन्तरतम आदेशो विधीयते।

**प्रत्यात्ममिति**। आत्मानमात्मानं प्रतीति समासः। स्थान्यात्मनोऽन्तरतम इत्यर्थः।

**स्वभावसिद्धत्वादिति**। तुल्यन्यायतया सूत्रप्रत्याख्यानायैतदुक्तं न तु संबन्धिशब्दत्वादिति। **समाजेष्विति**। **समाज** उत्सवेषु सङ्घातः। **समाशः**—सहभोजनम्। **समवायः**—कस्यांचित्क्रियायां मेलनम्।

**नैव कृशा इति**। गुणप्रमाणकृतसादृश्यपरिहारेण विद्याद्यर्थकृतमान्तर्यं लोक आश्रीयत इत्यर्थः। एवमिहापि यदीयमर्थं यः शक्नोति वक्तुं तस्य स्थाने स एव भवति। **गाव इति**।

---

उ०—आनर्थक्यं परिहरति—**उक्तं वेति**। द्वितीयपक्षाश्रेदमुपपादयति—**एकवाक्यतेति**। एवं चेतरस्याऽविधानमेवेति इष्टव्यवस्थासिद्धिरिति भाव। परे तु उत्पन्नानमनेन निवृत्तिर्लुगादिनेवेति भावः। एतदाशयमजानान आह—**निर्वृत्तिनं सिध्यतीति**। तदभ्युपेत्य समाधत्ते—**उक्तं वेति**। भुक्तवतो भोजनफलतृप्तेर्जातत्वान्निषेधस्य वैयर्थ्येऽपि शास्त्रे वृद्धिरादैच्सूत्रभाष्योक्तशास्त्रप्रामाण्याल्लुगादिनेव जातनिवृत्तिरिति वाशब्देन सूचितमित्याहुः।

**आत्मानमिति**। अनश्चेति टच्। **स्थान्यात्मन इति**। स्थानिपदार्थस्येत्यर्थः।

नन्वन्तरतमशब्दस्य सदृशार्थकत्वेन '**तुल्यास्यप्रयत्न**'मित्यत्रेव संबन्धिशब्दत्वादिति कुतो नोक्तमत आह—**तुल्येति**। **प्रत्यात्मं चासत इति**। स्वस्वसमाजेष्वेवाऽऽसत इत्यर्थः। **कस्यांचिदिति**। धर्मनिर्णयादिक्रियायामित्यर्थः।

अर्थकृतान्तर्ये सति तदेव प्रयोजनमित्याह—**गुणेत्यादि**। **पाण्डुत्वं-गुणः**। **कृशत्वादि-प्रमाणम्**। **विद्यादीति**। आदिनोत्सवाशनाद्यर्थित्वब्राह्मणत्वादिजातिधनादिसङ्ग्रहः। एवंच 'अन्तरतमो भवती'ति

---

‡ १।१।२७

त्वादेव'। तद्यथा—'समाजेषु समाशेषु समवायेषु चास्यता'मित्युक्ते नैव कृशाः कृशैः सहासते, न पाण्डवः पाण्डुभिः। येषामेव किंचिदर्थकृतमान्तर्यं तैरेव सहासते। तथा गावो दिवसं चरितवत्यो यो यस्याः प्रसवो भवति तेन सह शेरते। तथा—यान्येतानि गोयुक्तकानि संघुष्टकानि भवन्ति तान्यन्योन्यं पश्यन्ति[1] शब्दं कुर्वन्ति।

एवं तावच्चेतनावत्सु। अचेतनेष्वपि। तद्यथा—लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग्गच्छति नोर्ध्वमारोहति पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः। तथा या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः, स आकाशदेशे निवाते नैव तिर्यग्गच्छति नाऽवागवरोहति अब्विकारोऽप एव गच्छत्यान्तर्यतः। तथा ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितो नैव तिर्यग्गच्छति नावागवरोहति ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः।

**व्यञ्जनस्वरव्यतिक्रमे च तत्कालप्रसङ्गः॥ ६॥**

व्यञ्जनव्यतिक्रमे स्वरव्यतिक्रमे च तत्कालता प्राप्नोति। व्यञ्जनव्यतिक्रमे—

---

प्र०—तिरश्चामप्ययं व्यवहारः सङ्कीर्णानामसङ्करलक्षणः। एवं चोदनायां सङ्कीर्णा अप्यादेशा असङ्करेण प्रवर्त्स्यन्ति। **तथा यानीति**। यथा तत्र सादृश्याद्वर्गीभवनं विच्छिन्नसाहचर्याणामपि भवति तथा स्थान्यादेशाना स्थानादिना सादृश्येन वर्गीभवनमित्यर्थः।

**अचेतनेष्वपीति**। न्यायस्य व्याप्तिप्रतिपादनपरमेतत्। **अब्विकार इति**। अन्तरिक्षे सूक्ष्मः समुद्रोऽस्तीति तद्विकारः सर्वा आप इति काष्ठादिस्थानामपामग्निसंयोगाद्धूमो विकारः। सूर्यविकारोऽर्चिः सूर्यमेव गच्छति।

लोकव्यवहाराश्रयणेन प्रत्याख्याते सूत्रे तदनाश्रयेण योगारम्भे दोषमाह—**व्यञ्जनेति**।

---

उ०—'यत्रानेकविध'मिति च न्यायसिद्धमिति भावः। दृष्टान्ते विवक्षितार्थमाह—**सङ्कीर्णानामिति**। भाष्ये **प्रसवो**—वत्सः। **तेन सह**—स्वस्वप्रसवेन सह। **शेरत इति**। शेतिः स्थितौ। **एवं चोदनायामिति**। अनया रीत्या विधिशास्त्रेऽपीत्यर्थः। '**युक्तक**'शब्दो युग्मवाची। '**संघुष्टक**'शब्दस्तत्तद्युगवहनादिनाऽत्यन्तपरिचितवाची। अनेनापि ग्रन्थेन 'यत्रानेकविध'मित्यर्थः साधित इत्याहुः। **सादृश्यादिति**। तत्तद्युगवहनाद्यत्र सादृश्यम्।

**अन्तरिक्षे इति**। अन्तरिक्षे भवा आन्तरिक्ष्यः। अत एव निदाघे निशि निरावरणे शयानानां शैत्योपलम्भः। तस्यैव च रविकिरणसंपर्केण मेघरूपतया वायुयोगाद्वृष्टिः। आन्तरिक्ष्याणामपां परम्परया धूमो विकार इति दर्शयति—**तद्विकारः सर्वा इति**। **सूर्यविकार इति**। अत एव दावाग्नेर्मध्याह्ने सूर्यकरसंपर्कात् क्षैण्यातिशयो दृश्यते।

**तदनाश्रयणेनेति**। मन्दमध्यबुद्ध्यर्थः। ननु नाऽर्धमात्रिक इत्यत आह—**इदमेवेति कार्याः**

---

१—'मपश्यन्ति' पाठान्तरम्।

इष्टम् उप्तम् । आन्तर्यतोऽर्धमात्रिकस्य व्यञ्जनस्याऽर्धमात्रिक इक् प्राप्नोति । नैव लोके न च वेदेऽर्धमात्रिक इगस्ति । कस्तर्हि ? मात्रिकः । योऽस्ति स भविष्यति ।

स्वरव्यतिक्रमे—दध्यत्र मध्वत्र कुमार्यर्थं ब्रह्मबन्ध्वर्थमिति । आन्तर्यतो मात्रिकस्य द्विमात्रिकस्यैको मात्रिको द्विमात्रिको वा यण् प्राप्नोति । नैव लोके न च वेदे मात्रिको द्विमात्रिको वा यणस्ति । कस्तर्हि ? अर्धमात्रिकः । योऽस्ति स भविष्यति ।

**अप्लुत्वानेकवर्णादेशेषु ॥ १० ॥**

अप्लुत्वाऽनेकवर्णादेशेषु तत्कालता प्राप्नोति । 'इदम इश्' [ ५ । ३ । ३ ] । आन्तर्यतोऽर्धतृतीयमात्रिकस्येदमः स्थानेऽर्धतृतीयमात्रमिवर्णं प्राप्नोति ।

नैष दोषः । 'भाव्यमानेन सवर्णानां ग्रहणं ने' त्येवं न भविष्यति ।

**गुणवृद्ध्येज्भावेषु च ॥ ११ ॥**

गुणवृद्ध्येज्भावेषु च तत्कालता प्राप्नोति । खट्वा इन्द्रः खट्वेन्द्रः । खट्वा

---

प्र०—व्यतिक्रमः-स्थानित्वेन निवृत्तिः । इदमेव शास्त्रं निर्वर्तकमिति भावः । **नैव लोक** इति । नित्याः शब्दा अन्वाख्यायन्ते, निवृत्तिपक्षेऽप्युच्चारणस्याऽशक्यत्वादिति भावः ।

**नैव लोक इति** । कुक्कुटादिषु द्वे व्यञ्जने, न त्वेकं मात्रिकमिति भावः ।

**अर्धतृतीयमात्रमिति** । अत्वैकादेशयोः कृतयोरिश्भाव इति यदा प्रक्रियेति भावः ।

**भाव्यमानेनेति** । 'नैव लोक' इत्ययं परिहारो नोक्तः । यदा विशेषविहितत्वादत्वमिश्भावेन बाध्यते इति न्यायस्तदा त्रिमात्रस्य त्रिमात्रसंभवात्स्यादेव प्लुतः । प्लुताऽप्लुतप्रसङ्गे च '**प्लुतश्च विषये स्मृत**' इत्युच्यते । अत्र तु प्लुतस्यैव प्राप्तिः ।

**खट्वेन्द्र इति** । संज्ञयाऽत्र गुणवृद्ध्योर्भावनम् । संज्ञा च भिन्नकालानामपि स्यादिति

---

उ०—**शब्दा इति** दर्शने प्रमाणादिना तत्तदन्तरतमवर्णनिर्वर्तकमित्यर्थः । एवं च लोकवेदयोरभावेऽपि एतच्छास्त्रसिद्ध एव स इति भावः । यदुक्तम्—**इदमेवेति**, तत्राह—**नित्या इति** । **निवृत्तिपक्षेऽपीति** । 'शास्त्रकार्याः शब्दा' इति दर्शनेऽपीत्यर्थः । **उच्चारणस्येति** । तस्य लोकाधीनत्वादिति भावः ।

इदमस्त्रिमात्रिकत्वेनाऽर्धतृतीयमात्रिक इत्ययुक्तमत आह—**अत्वेति** । परत्वादत्वेऽन्तरङ्गत्वादेकादेशे इति भावः ।

**प्लुताप्लुतेति** । तादृशस्थले हि सपादसप्ताध्यायीस्थेन प्लुतविधौ त्रिपादीस्थप्लुतस्याऽसिद्धत्वात्तद्विषयेऽप्यनेनैव प्लुतविधौ तदंशेऽनुवादत्वमन्यांशे विधित्वमिति शास्त्रस्य वैरूप्यापत्तिस्तद्बीजम् । शास्त्रं त्वप्लुतविधानेन चरितार्थमिति । प्लुतमात्रविधाने तु तद्विषयकलक्षणवैयर्थ्यापत्त्यांशेऽनुवादत्वकल्पना सोढव्यैव । सामर्थ्येनान्तरतमपरिभाषाबाधकल्पनापेक्षयाऽनुवादत्वस्य युक्तत्वाच्चेति भावः ।

**संज्ञा चेति** । कार्यकालपक्षेऽपि यथा भाव्यमानत्वाऽभावस्तथोपपादितं **वृद्धिसंज्ञासूत्रे** ।

उदकम् खट्वोदकम् । खट्वा ईषा खट्वेषा । खट्वा ऊढा खट्वोढा । खट्वा एलका खट्वैलका । खट्वा ओदनः खट्वौदनः । खट्वा ऐतिकायनः खट्वैतिकायनः । खट्वा औपगवः खट्वौपगव इति । आन्तर्यतस्त्रिमात्र-चतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशाः प्राप्नुवन्ति ।

नैष दोषः । तपरे गुणवृद्धी । ननु च तः परो यस्मात्सोऽयं तपरः । नेत्याह । तादपि परस्तपरः । यदि तादपि परस्तपरः 'ऋदोरप्' [ ३ । ३ । ५७ ] इहैव स्यात्—यवः स्तवः । लवः पव इत्यत्र न स्यात् । नैष तकारः । कस्तर्हि ? दकारः । किं दकारे प्रयोजनम् ? अथ किं तकारे ? यद्यसन्देहार्थस्तकारो दकारोऽपि । अथ मुखसुखार्थस्तकारो दकारोऽपि ।

एज्भावे† कुर्वाते कुर्वाथे । आन्तर्यतोऽर्धतृतीयमात्रस्य टिसंज्ञकस्याऽर्धतृतीयमात्र एः प्राप्नोति । नैव लोके न च वेदेऽर्धतृतीयमात्र एरस्ति ।

**ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गोऽविशेषात् ॥ १२ ॥**

ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गः । सर्वे गुणवृद्धिसंज्ञका ऋवर्णस्य स्थाने प्राप्नुवन्ति । किं कारणम् ? 'अविशेषात्' । नहि कश्चिद्विशेष उपादीयते—एवंजातीयको गुणवृद्धिसंज्ञक ऋवर्णस्य स्थाने भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः ।

**न वा ऋवर्णस्य स्थाने रपरप्रसङ्गादवर्णस्यान्तर्यम् ॥ १३ ॥**

न वैष दोषः । किं कारणम् ? 'ऋवर्णस्य स्थाने रपरप्रसङ्गात्' । उः स्थानेऽ-

---

प्र०—'भाव्यमानेने'ति परिहारस्यात्राऽसंभवः ।

एज्भाव इति । प्रत्याहारः 'पूतक्रतोरै च' 'मनोरौ वा' इत्यादिसंग्रहार्थः । तत्र हि मात्रिक एवैकार ओकारश्च स्यात् ।

ऋवर्णस्येति । अत्र ह्रस्वस्याकार एव गुणः स्यात्स चेष्यत एव । दीर्घस्य त्वेङौ स्यातां, तुल्यप्रमाणत्वात् । तथा ह्रस्वस्य दीर्घस्य च सर्वे वृद्धिसंज्ञकाः प्राप्नुवन्ति । समुदायापेक्षया तु सर्वप्रसङ्ग इत्युच्यते ।

नवेति । 'उरण् रपर' इत्यनेन गुणवृद्धिशास्त्रस्यैकवाक्यतायां विधीयमान एवाऽण् रपरो

---

उ०—प्रत्याहार इति । 'वार्तिके गुणवृद्ध्येज्भावेषु' इति द्वन्द्वो, न तु कर्मधारयः, भाष्यविरोधादिति भावः । तत्र हीति । प्रमाणत आन्तर्यादिति भावः ।

नन्वेवं ह्रस्वे सर्वगुणप्रसङ्गस्याऽनुपपादनादवर्णमात्रे सर्वप्रसङ्ग इत्यनुपपन्नमत आह—समुदायापेक्षयेति । ऋवर्णीयह्रस्वादिसमुदायापेक्षयेत्यर्थः ।

गुणवृद्धिशास्त्रस्येति । प्रतिलक्ष्यं लक्षणभेदादवर्णविषयगुणादिशास्त्रस्येत्यर्थः । अक्षाऽन्त्यस्येक

---

† १ । ४ । ७६

ऋप्रसज्यमान एव रपरो भवतीत्युच्यते‡ । तत्र ऋवर्णस्यान्तर्यतो रेफवतो रेफवानकार एवान्तरतमो भवति ।

**सर्वादेशप्रसंगस्त्वनेकाल्त्वात् ॥ १४ ॥**

सर्वादेशस्तु गुणवृद्धिसंज्ञक ऋवर्णस्य प्राप्नोति । किं कारणम् 'अनेकाल्त्वात्' । 'अनेकाल्शित्सर्वस्य' [ १ । १ । ५५ ] इति ।

**न वाऽनेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्याऽविघातः ॥ १५ ॥**

न वैष दोषः । किं कारणम् ? 'अनेकाल्त्वस्य तदाश्रयत्वात्' । यदायमुः स्थाने तदायमनेकाल्, अनेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्य विघातो न भविष्यति ।

अथवाऽनान्वर्यमेवैतयोरान्तर्यम् । एकस्याप्यन्तरतमा प्रकृतिर्नास्ति, अपरस्या-

---

प्र०—भवतीति रश्रुतेरुः स्थानेऽरारौ क्रियमाणौ गुणवृद्धी भवत इत्यर्थः ।

**सर्वादेश इति** । ऋवर्णस्य स्थानेऽरारौ क्रियमाणावलोऽन्त्यस्येत्येतद्बाधेनाऽनेकाल्त्वात्सर्वादेशौ प्राप्नुतः ।

**नवेति** । 'अङ्गस्ये'ति षष्ठी पूर्वमेवाऽन्त्यमिकमनुसंह्रियते । ततश्च ऋवर्णस्य स्थानित्वे विज्ञातेरपरत्वमानुपूर्व्या सिद्धत्वात् पूर्वप्रवृत्तमलोऽन्त्यस्येत्यल्युपसंहारं न बाधत इत्यर्थः ।

**अथवेति** । निर्वृत्तस्याऽणो रपरत्वविधानेऽपि न दोष इत्यर्थः । **अनान्तर्यमेवेति** । नहि स्थानार्थगुणप्रमाणकृतमेवान्तर्यं परिभाषितं, रूपान्तरेणापि सादृश्यसंभवात्परिग्रहाच्चेति भावः । ऋवर्णस्य मात्रिकस्य मात्रिकोऽकारो गुणोऽन्तरतमोऽस्त्येवेति चेत् तदर्थस्य प्रयत्नस्याऽकरणाददोष एव । दीर्घस्य तुल्यप्रमाणत्वादेकारौकारावन्तरतमौ स्त इति चेत् । भवेदेतद्यदा

---

उ०—ऋवर्णस्य रपरोऽण्रूपो गुण इति वाक्यार्थ इति भावः । '**रश्रुते**' रित्यनेनैकदेशद्वारा स्थानत आन्तर्यमुक्तम् ।

**ऋवर्णस्येति** । ऋवर्णान्ताङ्गस्येत्यर्थः । **सर्वादेशाविति** । तत्त्वेऽपि समुदायान्तर्वर्तित्वादृवर्णस्य तदादेशत्वमपि खट्वर्श्य इत्यादाविव वक्तुं शक्यमिति भावः ।

**पूर्वमेवेति** । अन्यथा ऋवर्णस्थानिकत्वाऽभावाद्रपरत्वमेव न स्यात् । न च समुदायान्तःपातिऋकाराश्रयेण रपरत्वम् । प्रत्यक्षे ऋवर्णस्थानित्वे चरितार्थस्यानुमानिके प्रवृत्त्ययोगात् । खट्वर्श्यं इत्यादौ तु 'पूर्वपरयो'रित्यधिकारात् प्रत्यक्षमेव स्थानित्वमिति भावः । **पूर्वप्रवृत्तमिति** । उपजीव्यं चेत्यपि बोध्यम् । **न बाधत** इत्यत्राऽनेकाल्शित्सर्वस्येति सूत्रं कर्तृ ।

रेफवतो रेफवानन्तरतम एवेति **अथवे**त्ययुक्तमत आह—**निर्वृत्तस्येति** । **परिग्रहाच्चेति** । 'पाददन्ते'-त्यादौ स्थान्यादेशभावमते वर्णसाम्यकृतस्येति भावः । सदृशसंबन्ध्यभाववत्त्वमुभयोः साधारणधर्मरूपं सादृश्य-

---

‡ १ । १ । ५१

प्यन्तरतम आदेशो नास्ति, एतदेवैतयोरान्तर्यम् ।

**संप्रयोगो वा नष्टाश्वदग्धरथवत् ॥ १६ ॥**

अथवा नष्टाश्वदग्धरथवत् संप्रयोगो भवति । तद्यथा 'तवाऽश्वो नष्टो ममापि रथो दग्धः, उभौ संप्रयुज्यावहै' इति । एवमिहापि 'तवाप्यन्तरतमा प्रकृतिर्नास्ति, ममाप्यन्तरतम आदेशो नास्ति, अस्तु नौ संप्रयोगः' इति । विषम उपन्यासः । चेतनावत्स्वर्थात्प्रकरणाद्वा लोके संप्रयोगो भवति । वर्णाश्च पुनरचेतनाः, तत्र किंकृतः संप्रयोगः ? यद्यपि वर्णा अचेतना यस्त्वसौ प्रयुङ्क्ते स चेतनावान् ।

**एजवर्णयोरादेशेऽवर्णं स्थानिनोऽवर्णप्रधानत्वात् ॥ १७ ॥**

एजवर्णयोरादेशेऽवर्णं प्राप्नोति । खट्वैलका मालौपगवः । किं कारणम् ? 'स्थानिनोऽवर्णप्रधानत्वात्' । स्थानी ह्यत्राऽवर्णप्रधानः ।

**सिद्धं तूभयान्तर्यात् ॥ १८ ॥**

सिद्धमेतत् । कथम् ? उभयोर्योऽन्तरतमस्तेन भवितव्यम् । न चावर्णमुभयोरन्तरतमम् ॥ ५० ॥

---

प्र०—भेदापेक्षा क्रियते । ऋवर्णमात्रस्य ह्रस्वाद्यवान्तरभेदानपेक्षायां स्थानकृतमान्तर्यं न केनचिदस्तीत्यनान्तर्यमेवेत्याद्युक्तम् ।

**सम्प्रयोगो वेति** । यदा 'स्थानेन्तरतम' इत्येतत्प्रत्याख्यातमित्यर्थः ।

**अवर्णप्रधानत्वादिति** । इममेव हि न्यायमाश्रित्योक्तमैचोश्चोत्तरभूयस्त्वादिति ।

**उभयान्तर्यादिति** । ह्रस्वशासने ह्यैचः समुदायान्तरतमाभावादैचोश्चेत्युक्तम् । इह तु संभवत्येव स्थानेन समुदायान्तरतम इत्यर्थः ॥ ५० ॥

---

उ०—मिति तात्पर्यम् । **यत्नस्येति** । परिहारान्तराभिधानरूपस्येत्यर्थः । **स्थानकृतमिति** । **अनान्तर्यमिति** भाष्यस्य स्थानकृतान्तरतमाऽभाव इत्यर्थः ।

**नष्टाश्वदग्धरथवदिति**—बहुव्रीहिगर्भद्वन्द्वाद्वतिः । पूर्वोक्तेनाऽथवेत्यनेन पौनरुक्त्यं परिहरति–**यदेति** । केचित्तु—"तत्प्रत्याख्यानेऽपि लोकन्यायेन सदृश एवादेश इत्यर्थः साधितो भगवतेति प्रत्याख्यानाऽप्रत्याख्यानयोः को विशेषस्तस्मादनान्तर्यस्याऽभावरूपस्य सादृश्यत्वाऽनङ्गीकारेऽप्याह—**नष्टाश्वेति** । ऋवर्णस्य स्थानित्वेनाऽवर्णस्यादेशत्वेन ग्रहणसामर्थ्यादसादृश्येऽपि स्थान्यादेशभावः । यथा नष्टाश्वदग्धरथयोरत्यन्तभिन्नयोरपि असदृशयोरपि संप्रयोग इति तात्पर्य"मित्याहुः ।

**प्रधानत्वं**—भूयस्त्वेन । भूयस्त्वन्यायस्तर्हि केत्यत आह—**ह्रस्वेति** ॥ ५० ॥

## उरण् रपरः ॥ १ । १ । ५१ ॥

**किमिदमुरण्रपरवचनमन्यनिवृत्त्यर्थम्—'उः स्थानेऽणेव भवति रपरश्चे'ति । आहोस्विद्रपरत्वमात्रमनेन विधीयते—'उः स्थानेऽण् चाऽनण् च, अण् तु रपरः' इति । कश्चाऽत्र विशेषः ?**

प्र०—उरण् । किमिदमिति । षष्ठीप्रकरणाद्यत्र षष्ठी तत्रेदमुपतिष्ठते । तत्र किमादेशान्तराणांबाधकमणं निर्वर्तयति, तस्य च वाक्यभेदेन रपरत्वम् । आहोस्विद्रपरत्वमात्रमनेन क्रियते—'उः स्थाने लक्षणान्तरेण निष्पन्नो योऽण् स रपर'इति प्रश्नः । तत्र केषांचित्पाठो'ऽण् भवति रपरश्चे'ति । तत्राऽपूर्वोऽण् विधीयमान आदेशान्तराणां बाधकः । अन्येषां तु पाठो'ऽणेव भवती'ति । तत्र सामर्थ्याच्चाऽन्यनिवृत्तिः । सैवैवकारेण प्रदर्श्यते ।

उ०—उरण् । भाष्ये–उरणरपरवचनमिति सूत्रस्थविसर्गप्राग्भागानुकरणेन षष्ठीसमासः । नन्वन्यशब्देन न स्थानी, आदेशस्य स्थानिनिवर्त्तकत्वस्वभावत्वात् । न स्थानिव्यतिरिक्तः, 'उर'णित्येतावतः स्थानिव्यतिरिक्तनिवर्त्तने सामर्थ्याऽभावादत आह–षष्ठीति । यत्र षष्ठ्या ऋवर्णस्यादेशप्रसक्तिस्तत्रेत्यर्थः । स्वातन्त्र्येणाऽस्य विधायकत्वं तु—'इको गुणवृद्धी'इत्यत्र भाष्ये एव निराकृतम् । तत्र यद्यन्यनिवृत्त्यर्थत्वं नियामकत्वेन, तदा'अथ मतमेत'दिति वक्ष्यमाणस्य विशेषो न स्यादत आनुषङ्गिकं तदित्याह – तत्रेति । अपूर्व इति । वाक्यभेदेन—ऋनित्यादिरुदात्तो भवति, ऋवर्णस्य त्वण् भवति, स च रपरः' इत्यर्थ इति भावः । तत्र सामर्थ्यादिति । विशेषविधेः सामान्यविधिबाधकत्वेनेत्यर्थः । न तु वाच्यवृत्त्याऽस्य नियमपरत्वमिति भावः ।

१—"अत्र काशिकाकृज्जयादित्य—भट्टोजिदीक्षितादिभिरुक्तम्–'हकारादिष्वकार उच्चारणार्थो नानुबन्धः । लकारे त्वनुनासिकः प्रतिज्ञायते । तेन 'उरण् रपरः [ १ । १ । ५१ ] इत्यत्र प्रत्याहारग्रहणाल्लपरत्वमपि भवति ।' तदिदमवद्यम् । कुतः । इह व्याकरणे कॢपिस्थ एक एव ऌकारः । स च रपरकरणेऽसिद्धः । तेन ऌकारस्य कार्याणि ऋकारे भविष्यन्तीति लपरप्रयोजनाऽभावात् ।" [ अष्टाध्यायीभाष्ये लणसूत्रे महर्षिर्दयानन्दः ]

"जयादित्य और······भट्टोजिदीक्षितादि ने कहा है कि हकारादि वर्णों में तो अकार उच्चारण करने के लिये है, परन्तु लकार में जो अकार है, वह अनुनासिक होने से इत्संज्ञक होता है । उस से एक र—प्रत्याहार नया बनता है । उसका काम 'उरण् रपरः' सूत्र में लपर होने के लिये पड़ता है । अब देखना चाहिये, पाणिनि जी महाराज ने सब प्रत्याहार हल् अक्षरों से बांधे हैं । ये लोग उन से विरुद्ध चलते हैं कि अकार की इत्संज्ञा करके र—प्रत्याहार बनाते हैं । यह बात महाभाष्य में भी कहीं नहीं । उनके अभिप्राय से इस बात का खण्डन तो होता है ।······फिर इन लोगों का विरुद्ध चलना, नवीन प्रत्याहार का बनाना, केवल मिथ्या ही है ।"

[ अ० भा० महर्षि दयानन्द ]

स्वयं पाणिनि ने भी र—प्रत्याहार ( र्+ल्+अँ ) का प्रयोग न करके साक्षात् 'र् ल्' का ही उच्चारण 'अतो र्लान्तस्य ७ । २ । २ । सूत्र में किया है । यदि उन्हें 'र' प्रत्याहार अभीष्ट होता तो वे यहाँ उसी का ग्रहण करते । इससे लाघव भी हो जाता । ( सम्पादक )

**उरण्रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषः ॥ १ ॥**

उरण्रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषो भवति । के पुनरुदात्तादयः ? उदात्तानुदात्तस्वरितानुनासिकाः । कॄर्तिः हॄर्तिः*, कृतम्, हृतम्†, प्रकृतम् प्रहृतम्‡, नॄँः पाहि+ ।

अस्तु तर्ह्युः स्थाने अण् चाऽनण् च, अण् तु रपर इति ।

**य उः स्थानेऽण् स रपर इति चेद् गुणवृद्ध्योरवर्णाऽप्रतिपत्तिः ॥ २ ॥**

य उः स्थाने अण् स रपर इति चेद्गुणवृद्ध्योरवर्णस्याऽप्रतिपत्तिः । कर्ता हर्ता वार्षगण्यः । किं हि साधीयः—ऋवर्णस्याऽसवर्णे यदवर्णं स्यान्न पुनरेङैचौ ? पूर्वस्मिन्नपि पक्षे एष दोषः । किं हि साधीयस्तत्रापि ऋवर्णस्याऽसवर्णे यदवर्णं स्यान्न पुनरिवर्णोवर्णौ । अथ मतमेतत्—'उः स्थानेऽणश्चानणश्च प्रसङ्गेऽणेव भवति रपरश्चे'ति, सिद्धा पूर्वस्मिन् पक्षेऽवर्णस्य प्रतिपत्तिः । यत्तु तदुक्तम्—'उदात्तादिषु

---

प्र०—उदात्तादिष्विति । अन्तरतमस्य बाधकोऽण् प्रसज्येतेति भावः । स चोदात्तादिगुणो न वेति सर्वथा दोषः । नॄँः पाहीति । यद्यप्यस्मिन् पक्षे पूर्वसवर्णऋकारो न लभ्यते, तथापि 'नॄन् पे' इति निपातनाद्भवति । नकारस्य तु रुत्वे कृतेऽनुनासिको विधीयमानोऽणेव स्यान्न तु ऋकार इति दोषः । प्रतिपदविहितैरित्त्वोत्त्वादिभिरयं हि बाध्यत इति तेषां रपरत्वं न स्यात् ।

गुणवृद्ध्योरिति । भूतस्य चेदणो रपरत्वं क्रियते, तदा तु गुणवृद्धिविधावणेव दुर्लभ इति दोषः । किं हि साधीय इति । किं साधुतरं कारणमित्यर्थः । न पुनरिति । ततश्चाऽवर्णस्यैव नियमेनाऽप्रतिपत्तिरिति व्याख्येयम् । अथ मतमिति । स एव पक्षाक्षेपवाद्याह । नानेनाऽ-

---

उ०—स चोदात्तादिगुण इति । अत्र पक्षेऽनन्तरस्येति न्यायेनाऽन्तरतमपरिभाषाया अनेन बाध इति भावः । नवेति । यत्रोपस्थितिस्तद्विधेयस्य बाध इत्यभिमानः । भाष्ये कृतिर्नित्स्वरेणाद्युदात्तः । कृतमित्यत्र प्रत्ययस्वरेणान्तोदात्तत्वे शेषनिघातेन ऋकारोऽनुदात्तः । प्रकृते—'गतिरनन्तर' इति पूर्वपदप्रकृतिस्वरे शेषनिघाते 'उदात्तादनुदात्तस्ये'ति स्वरितत्वम् । उच्चैरुदात्त इत्यादिषु षष्ठ्यन्तमच इत्यनुवर्त्तत इति पक्षे 'ञ्नित्यादि'रित्यादावच इत्युपस्थितेः षष्ठीसद्भावादुरणित्यस्योपस्थानमिति द्रष्टव्यम् । नियमपक्षे वक्ष्यमाणदोषमत्राप्याकृष्य दर्शयति—प्रतिपदेति । तेषामिति । प्रत्यासत्त्योरणित्यनेन विधीयमानस्याऽणो विधीयमानमितिशेषः ।

दुर्लभ इति । ह्रस्वस्य गुणाऽकारलाभेऽपि दीर्घस्याकारगुणाऽलाभः, वृद्धिस्तु नियमेनाऽण् न लभ्यते इत्यर्थः । कर्तेत्याद्युदाहरणं भाष्ये दीर्घान्तस्याप्युपलक्षणम् । किमित्यस्य विशेष्यमाह–कारणमिति । भाष्ये असवर्णे । सदृशाऽभावे इत्यर्थः । ननु नियामकाऽभावे कदाचिदवर्णस्यापि प्रतिपत्तौ कथमवर्णाऽप्रतिपत्तिरत आह—ततश्चेति । दोषपरिहारायाऽऽक्षेपवाद्येवान्यनिवृत्त्यर्थमित्यस्य नियमपरतया व्याख्या-

---

* ६ । १ । १९७ † ३ । १ । ३; ६ । १ । १५८ ‡ ६ । २ । ४९; ६ । १ । १५८; ८ । ४ । ६६ + ८ । ३ । १०; २

**दोषः' इति स दोषो जायते, न जायते ? जायते स दोषः । कथम् ? उदात्त इत्यनेनाणोऽपि प्रतिनिर्दिश्यन्ते अनणोऽपि । यद्यपि—[ अणोऽपि ] प्रतिनिर्दिश्यन्ते न तु प्राप्नुवन्ति । किं कारणम् ? स्थानेऽन्तरतमो भवतीति† । कुतो नु खल्वेतत्—द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः 'स्थानेऽन्तरतमः' इति 'उरण् रपरः' इति च, 'स्थानेन्तरतम' इत्यनया परिभाषया व्यवस्था भविष्यति, न पुनरुरण् रपर इति ? अतः किम् ? अत एष दोषो जायते—'उदात्तादिषु दोषः' इति ।**

**ये चाप्येते ॠवर्णस्य स्थाने प्रतिपदमादेशा उच्यन्ते, तेषु रपरत्वं न प्राप्नोति—'ॠत इद्धातोः [ ७ । १ । १०० ] 'उदोष्ठ्यपूर्वस्य' [ १०२ ] इति ।**

---

प्र०—न्येषां बाधकोऽपूर्वोऽण् विधीयते, किंत्वणनणोः प्रसङ्गेऽणेव भवतीति नियमः क्रियते, स च रपरः । न च गुणवृद्धिप्रसङ्गे इकारोकारयोः प्राप्तिः । **यत्तु तदुक्तमिति** । किं भवान्मन्यत इति विचारयति । स एव युक्तियुक्तं पक्षं गृह्णाति—**जायत** इति । **कुतो नु खल्विति** । अन्तरतमपरिभाषाया अवकाशो'ऽकः सवर्णे दीर्घो','झयो होऽन्यतरस्या'मिति । 'उरण् रपर' इत्यस्यावकाशः-कर्ता हर्त्तेति । इहोभयं प्राप्नोति—कृतिरिति । परत्वादियमेव प्राप्नोतीति दोषः ।

**ये चाप्येत इति** । यत्र ह्यनियमप्रसङ्गस्तत्राऽनेन नियमः क्रियते । तत्र तच्छेषभूतं रपरत्व भवति न त्वन्यत्र प्रतिपदविधाविति दोषः ।

---

उ०—नमाशङ्क्य दूषयति भाष्ये-**अथ मतमिति** । **एतत्**-वक्ष्यमाणं नियमरूपत्वमन्यनिवृत्त्यर्थमिति वदतो, **मतं**—संमतं विवक्षितमित्यर्थः । **सिद्धा पूर्वस्मिन्निति** । अन्यनिवृत्त्यर्थमिति पक्षे इत्यर्थः । **सचेति** । वाक्यभेदेनेत्यर्थः । नन्वेवमिकारोकारावपि स्यातामत आह—**नच गुणेति** । **भवानिति** । नियमपक्षवादीत्यर्थः । **स एवेति** । विचारक एवेत्यर्थः । शङ्कते भाष्ये—**यद्यप्यणोपीति** । परिहरति—**कुतो न्विति** । तमब्ग्रहणसहितस्याप्यवकाशप्रदर्शनाय **'झयो ह'** इत्युक्तम् । **उरण्रपर इत्यस्यावकाश इति** । गुणविधौ **'स्थानेन्तरतम'**परिभाषानुपस्थितिः ॠवर्णसमुदायान्तरतमगुणाऽभावादिति भावः । यद्यपि भाष्याद्विनिगमनाऽभावो लभ्यते, तथापि 'एष दोषो जायत'इत्युत्तरग्रन्थाऽसङ्गतेर्विनिगमकं प्रदर्श्यान्तरतमपरिभाषाऽवृत्तिमुपपादयति—**परत्वादिति** ।

ननु प्रतिपदविहिता अप्यण एवेति कुतो रपरत्वाऽप्राप्तिरत आह—**यत्रहीति** 'ग्रो यङी'ति लत्वविधानादावृत्त्या तेषामपि रपरत्वमिति चेत्, ॠकारान्तर्गतरेफस्य लत्वार्थं तत्स्यादिति न दोषः । भाष्ये—**येचाप्येत इति** ।

---

† १ । १ । ५०

## सिद्धं तु प्रसङ्गे रपरत्वात् ॥ ३ ॥

**सिद्धमेतत् । कथम् ? 'प्रसङ्गे रपरत्वात्' । उः स्थाने अण् प्रसज्यमान एव रपरो भवतीति । किं वक्तव्यमेतत् ? नहि । कथमनुच्यमानं गंस्यते ? स्थान इति वर्तते । स्थानशब्दश्च प्रसङ्गवाची । यद्येवमादेशोऽविशेषितो भवति । आदेशश्च विशेषितः । कथम् ? द्वितीयं स्थानग्रहणं प्रकृतमनुवर्तते । तत्रैवमभिसंबन्धः करिष्यते— उः स्थाने अण् स्थान इति । उः प्रसङ्गेऽण् प्रसज्यमान एव रपरो भवति ।**

---

**प्र०—सिद्धं त्विति ।** विधिवाक्यैरस्यैकवाक्यतायां विधानकाल एवाऽणो रपरत्वं क्रियत इत्यर्थः । **यद्येवमिति ।** नह्यनेनोः स्थानेऽण् विधीयतेऽपि तु लक्षणान्तरेण । तत्र विध्यङ्गभूता 'षष्ठी स्थानेयोगे'ति परिभाषा नोपतिष्ठते । तथा चोदीचामातः स्थाने यकपूर्वाया इत्यत्र स्थान-ग्रहणं कृतम् । तत उः समीपे योऽण् तस्यापि रपरत्वप्रसङ्ग इति स्थानग्रहणानुवृत्त्या 'उः स्थाने य आदेशोऽणि'त्येतावल्लभ्यते, न तु प्रसज्यमान इति । **आदेश इति ।** प्रसज्यमानत्वेने-त्यर्थः । अथवा स्थानग्रहणानुवृत्त्या प्रसज्यमान इत्येषोऽर्थो लभ्यते, नतूः स्थान इति । ततश्चाऽण आदेशरूपतानियमेन न लभ्यत इति सामीप्यलक्षणोऽपि संबन्धोऽवगम्येतेत्यर्थः । **द्वितीयमिति ।** तच्चाऽर्थात् प्रथमान्तं संपद्यते । अथवा सप्तम्यन्त एव तस्मिन्नयमर्थो भवति–प्रसङ्ग एवाऽत्राऽण रपरो भवतीति । इदानीमुदात्तादिषु दोषो नास्ति, 'स्थानेन्तरतम' इत्यनया परिभाषया कृति-रित्यादावृकारस्य ऋकारएव प्रवर्तत इत्यणः प्रसङ्ग एव नास्ति । गुणवृद्धी च ऋकारस्य विधी-यमाने अरारावेवान्तरतम्याद्भवत इत्यवर्णप्रतिपत्तिरप्यस्ति ।

---

**उ०—विधीति ।** ऋवर्णस्थानिकाऽणविधिवाक्यैरित्यर्थः । **एकवाक्यतायामिति ।** वाक्यैकवाक्य-तायामित्यर्थः । ननु 'उ'रिति षष्ठ्याः स्थानेयोगत्वस्य लाभः स्यादत आह—**नहीति ।** एवं चाऽयमनुवाद इति भावः । **विध्यङ्गेति ।** विधेयेन साक्षाद्यत्र संबन्धस्तत्र सा परिभाषेत्यर्थः । 'उदात्तस्वरितयोर्यणो' 'लः परस्मैपद'मित्यादावनुवादेऽप्यस्याः प्रवृत्त्यर्थं यद्येवमित्यादिभाष्यमेकदेशिनोक्तिरिति बोध्यम् । **उःसमीप इति ।** तथा च तृतीय इत्यादावप्यणो रपरत्वप्राप्तिरित्यर्थः । सामीप्यं चेषद्व्यवहितेऽपीतिभावः । **स्थाने य आदेशो-ऽणिति ।** अनुवर्तमानस्थानेग्रहणमुरित्यस्य संबन्धिशब्दत्वात्तत्रैव संबध्येतेत्यर्थः । नन्वेवमादेशः स्थानेन विशेषित एवेति **'आदेशोऽविशेषित'** इति भाष्याऽसङ्गतिरित्यत आह—**प्रसज्यमानत्वेनेति । अथवा स्थानेति ।** 'स्थान'शब्दस्य प्राधान्याद्रपर इत्यनेन संबन्ध इति भावः । **तत इति । अणः स्थाने**—पदार्थे-नाऽविशेषणादित्यर्थः । एवं च नादेऽऽशान्तराणा बाधकोऽणिवधीयते, नापि नियमः, नापि विहितस्य रपरत्वं, प्रसज्यमानत्वेन विशेषणात् । किं तु तत्तद्विधिभिर्वाक्यैकवाक्यतैवाऽस्येति बोध्यत इति बोध्यम् । **अथवेति ।** स्थानपदेन प्रसङ्गकालो लक्ष्यत इति भावः । **ऋकार एवेति ।** स्थानतः प्रमाणतः स्वरूपतश्च सदृशत्वादिति भावः ।

अथाऽण्ग्रहणं किमर्थम्, न 'ऊ रपर' इत्येवोच्येत ? 'ऊ रपर' इतीयत्युच्यमाने क इदानीं रपरः स्यात् ? य उः स्थाने भवति ? कश्च उः स्थाने भवति ? आदेशः ।

**आदेशो रपर इति चेद्रीरिविधिषु रपरप्रतिषेधः ॥ ४ ॥**

'आदेशो रपर' इति चेद्रीरिविधिषु रपरत्वस्य प्रतिषेधो वक्तव्यः । के पुना रीरिविधयः ? अकङ्लोपाऽऽनङनङ्रीङ्रिङादेशाः । अकङ्—सौधातकिः‡ । लोपः—पैतृष्वसेयः× । आनङ्—होता पोतारौ+ । अनङ्—कर्ता हर्ता* । रीङ्—मात्रीयति पित्रीयति† । रिङ्—क्रियते ह्रियते†† ।

**उदात्तादिषु च ॥ ५ ॥**

उदात्तादिषु च । किम् ? रपरत्वस्य प्रतिषेधो वक्तव्यः । कॄर्तिः हॄर्तिः । कॄतम् हॄतम् । प्रकॄतम् प्रहॄतम् । नॄँः पाहि । तस्मादण्ग्रहणं कर्तव्यम् ।

**एकादेशस्योपसंख्यानम् ॥ ६ ॥**

एकादेशस्योपसंख्यानं कर्तव्यम् । खट्वर्श्यः मालर्श्यः++ । किं पुनः कारणं न सिध्यति ? उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते, न चायमुरेव स्थानेऽण् शिष्यते । किं तर्हि ? उश्चाऽन्यस्य च ।

---

**प्र०—रीरिविधिष्विति ।** बहुवचननिर्देशाद्रीरिशब्दावुपलक्षणमिति पृच्छति—**के पुनरिति । पैतृष्वसेय इति ।** लोपवचनं तु सर्वादेशार्थं स्यात् । **होतापोताराविति ।** रेफस्य संयोगान्तलोपे कृते तस्याऽसिद्धत्वान्नलोपो न स्यात् ।

**एकादेशस्येति ।** पूर्वपरयोरिति समुदायस्य स्थानित्वेन चोदितत्वात्तस्य च ऋवर्णरूपत्वाऽभावादिति भावः ।

---

उ०—ननु वार्तिकोक्तरीरिविध्योर्गतत्वात्तस्य चोपलक्षणत्वे प्रमाणाऽभावात् 'के पुन'रिति प्रश्नानुपपत्तिरत आह—**बहुवचनेति । सौधातकौ**—'सुधातुरकङ्चे'ति इञ् । **पैतृष्वसेये**—ढकि लोपस्तत एव ढक्च । ननु लोपस्य रपरत्वे तं विनाऽपि यणादेशेन तत्साध्यरूपसिद्धिरत आह—**लोपेति ।** रपरत्वाऽभिधानमुखेन सर्वादेशत्वमेव लोपस्याऽभिधित्सितमिति भावः । यदि सर्वादेशो लोपस्तदा उः स्थाने नेति कथं रपरत्वमितीदं चिन्त्यम् । तस्माल्लोपविधिवैयर्थ्यापादनमेव दोष इति तत्त्वम् । **आनङनङौ**—'आनङ् ऋतोद्वन्द्वे' 'ऋदुशने'ति विहितौ । **रेफस्येति ।** झल्ग्रहणापकर्षाद्यणः प्रतिषेधारम्भाच्च चिन्त्यमिदम् । तस्माद्रेफश्रवणमेव दोषोऽत्रेति बोध्यम् ।

**समुदायस्येति ।** द्वन्द्वस्य सत्त्वादिति भावः ।

---

‡ ४ । १ । ९७ × ४ । १ । १३३ + ६ । ३ । २५ * ७ । १ । ९४
† ७ । ४ । २७ †† ७ । ४ । २८ ++ ६ । १ । ८७

**अवयवग्रहणात्सिद्धम्। यदत्र ऋवर्णं तदाश्रयं रपरत्वं भविष्यति। तद्यथा 'माषा न भोक्तव्या' इत्युक्ते मिश्रा अपि न भुज्यन्ते।**

**अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तप्रतिषेधः ॥ ७ ॥**

**अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तस्य प्रतिषेधो वक्तव्यः। होतापोतारौ+। यथैवोश्चाऽन्यस्य च स्थानेऽण् रपरो भवति, एवं य उः स्थानेऽण् चाऽनण् च सोऽपि रपरः स्यात्।**

**यदि पुनरृवर्णान्तस्य स्थानिनो रपरत्वमुच्येत, खट्वर्श्यः मालर्श्यः। नैवं शक्यम्। इह हि दोषः स्यात्—कर्ता हर्ता, किरति गिरति*। ऋवर्णान्तस्येत्यु-**

प्र०—**अवयवग्रहणादिति**। पूर्वपरयोरित्यनेनोद्भूतावयवभेदः समुदायो निर्दिश्यते। अवयवावेवचाऽपेक्षितपरस्परौ समुदाय इति भवत्ययमृवर्णस्थान इति भावः।

**रान्तप्रतिषेध इति**। आनङि विधीयमाने आकारस्याऽणो भावादित्यर्थः। तस्मादवयवग्रहणादित्यस्याऽतिव्यापकत्वाद्यत्र साक्षादृवर्णस्याऽण् विधीयते तत्रैवेदमुपतिष्ठत इत्येकादेशस्योपसङ्ख्यानं कर्तव्यमेव।

**यदि पुनरिति**। 'उ'रिति वर्णग्रहणाद्वर्णग्रहणं च सर्वत्र तदन्तविधिं प्रयोजयतीति न्यायादृवर्णान्तस्य ग्रहणम्। 'खट्वर्श्य' इत्यत्र च समुदाय ऋवर्णान्तो भवतीति सिद्धं रपरत्वम्। **कर्तेति**। 'अङ्गस्ये'ति षष्ठी अन्त्यमलमुपसंहृ नेति ऋवर्णस्य गुणेन भाव्यम्। न च ऋवर्णमृवर्णान्तो भवतीति दोषः। न चेह तदन्तविधिरस्ति, 'उर'णिति भूतानुवादात्। न च प्रदेशेषु

उ०—**उद्भूतेति**। अतएव द्विवचननिर्देशः। तत्सामर्थ्यादेव प्रत्येकं स्थानित्वबुद्धिरिति भावः। न चावयवभेदस्योद्भूतत्वविवक्षा नाम तद्गतसंख्यायाः समुदाये आरोपो, नैतावता प्रत्येकं स्थानित्वलाभोऽत आह—**अवयवावेव चेति**। 'इतरेतरयोग' इति शेषः। एवंच तत्र समुदायस्यावयवाऽभेदेन बोधनाद्द्विवचनेन प्रत्येकं तयोः स्थानित्वलाभः। अयमेव चोद्भूतावयवभेदः समुदाय इत्यस्यार्थ इति भावः।

भाष्येऽगृहीताभिप्रायः समुदायस्यातिरिक्तस्य स्थानित्वेपि तदन्तर्गतावयवस्यापि स्थानित्वमादाय ऋस्थानिकत्वमनेनोक्तमित्यभिप्रायवानाह—**अवयवग्रहणात्सिद्धमिति चेदिति**। **रान्तस्येति**। रान्तत्वस्येत्यर्थः।

**ऋवर्णान्तेति**। शब्दशास्त्रप्रस्तावाच्छब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः। नन्विकाऽङ्गे विशेष्यमाणे तदन्तविधेरृवर्णान्तस्य गुणेन भाव्यमत आह—**अङ्गस्येति**। **षष्ठीति**। 'इगन्ताङ्गान्त्यस्य गुण' इति वाक्यार्थ इति भावः। भाष्ये लक्ष्याऽसिद्धिदोषो ऋवर्णान्तस्येत्यर्थे उक्तः। स्वयं तदर्थाऽसम्भवमप्याह—**न चेहेति**। **भूतानुवादादिति**। एवंचाऽनुवादे परिभाषाया इव संज्ञाया अप्यप्रवृत्तिः। यद्वा समानविभक्त्यन्तविशेष्यरहिताभूतानुवादादित्यर्थः। यत्र हि साक्षादर्थाद्वा विशेषणसमानाधिकरणं विशेष्यमुपादीयते तत्रैव वर्णग्रहणे तदन्तविधिः। गमकं विना शब्दरूपं विशेष्यमादाय तु न तदन्तविधि-

+ ६।३।२५ * ७।३।८४; ७।१।१००

परिहारम्†† । इहापि परिवीरिति । शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यति ।

कानि पुनरस्य योगस्य प्रयोजनानि ?

**प्रयोजनमपृक्तशिलोपे नुममामौ गुणवृद्धिदीर्घत्वेमडाड्श्रम्विधयः ॥१४॥**

अपृक्तलोपे शिलोपे च कृते** नुम्, अमामौ, गुणवृद्धी, दीर्घत्वम्, इम्, अडाटौ, श्रम्विधिरिति प्रयोजनानि ।

नुम्—अग्ने त्री ते वाजिना त्री षधस्था‡‡ । ता ता पिण्डानाम्††† । नुम् ॥ अमामौ—हे अनड्वन् अनड्वान्++ ॥ गुणः—अधोक् अलेट्×× । वृद्धिः—

प्र०—येत्यादौ च सति प्रत्यये दीर्घो दृष्टो, न तुगिति परिवीरित्यत्रापि दीर्घ एव भवति ।

**प्रयोजनमिति** । यद्यप्यल्विध्यर्थमिदमतृणेडित्यादौ, तथापि विशेषविहितत्वान्नुमादयोऽप्यस्यैवोदाहरणानीति भावः ।

**अनड्वन्निति** । पूर्वं संबुद्धिलोपमाश्रित्यैतदुक्तम् । यदि तु विशेषविहितत्वादम्संबुद्धाविति पूर्वमम् प्रवर्तते, तदा संबुद्धिलोपो न स्यात् । **ऐयइति** । इयर्तेर्लङ्, तिप् शपः श्लुः, द्विर्वचनम् ।

उ०—विप्रतिषेधशास्त्रोपयोगीति भावः । तदाह—**सति प्रत्यये इति** । इदं सूत्रं तत्तच्छास्त्रनिमित्तसम्पादनद्वारा तत्तच्छास्त्रप्रवृत्तिसम्पादकमिति भावः । अत एव पूर्वं 'तान्यनेन प्रत्युत्थाप्यन्ते' इत्युक्तम् । **तानि**—तत्कार्यबोधकानि शास्त्राणीति तदर्थं उचितः, न तु कार्याणि क्रियन्त इत्यर्थः । [ क्रियन्ते इत्यस्यैव वक्तुमुचितत्वात् ] । अत एव 'टित आत्मनेपदाना'मिति सूत्रे पर्यवपादो रूपान्तरापत्तिरित्युक्तं कैयटेन । विद्यमानस्य हि रूपान्तरापत्तिर्भवति । शास्त्रमेव च विद्यमानं न तु कार्यम् । तस्य च रूपान्तरमेतद्विषये कार्यान्तरप्रवर्त्तकत्वम् । एवं च पर्यवपन्नत्वमपि शास्त्रस्येत्यन्ये ।

भाष्ये—**कानि पुनरिति** । पूर्वमेतत्सूत्रकरणे का युक्तिरिति युक्तिप्रश्नः । इदानीं तु प्रयोजनप्रश्न इति न पौनरुक्त्यम् । अत एव सदन्वाख्यानादिति प्रागुत्तरितम् ।

**यद्यप्यल्विध्यर्थमिति** । 'इद'मिति शेषः । **विशेषविहितत्वादिति** । प्रत्ययविषये शीघ्रोपस्थितिकत्वादित्यर्थः ।

**त्री ते इत्यादौ** शेश्छन्दसी'ति लोपः । नुम्फलं तु दीर्घः । **आश्रित्येति** । अपवादबाधकवाचनिकपूर्वविप्रतिषेधाश्रयेणेति भावः । न्यायेन पूर्वं लोपप्राप्तेरत्यल्पविषयत्वात् । **विशेषविहितत्वादिति** । येन नाप्राप्तिन्यायेनाऽपवादत्वादित्यर्थः । **तदेति** । 'अपवादविषयं परित्यज्ये'ति न्यायेनापवादविषये उत्सर्गोऽ

†† अनुपदमेव वक्ष्यति—"भसञ्ज्ञायां तावन्न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'न प्रत्ययलक्षणेन भसंज्ञा भवती'ति । यदयं 'न ङिसम्बुद्ध्यो'रिति ङौ प्रतिषेधं शास्ति" इति ।

** हल्ङ्याब्भ्यो०; शेश्छन्दसि बहुलम् ६ । १ । ६८; ७० ‡‡ ऋ० सं० ३ । २० । २

††† नपुंसकस्य झलचः ७ । १ । ७२ ++ अम् संबुद्धौ; चतुरनडुहोरामुदात्तः ७ । १ । ९९; ९८ ×× पुगन्तलघूपधस्य च ७ । ३ । ८६

न्यमार्ट्* । दीर्घत्वम्–अग्ने त्री ते वाजिना त्री षधस्था । ता ता पिण्डानाम्+ । इम्—अतृणेट् ॥ अडाटौ—अधोक् अलेट्, ऐयः औनः× ॥ श्नम्विधिः—अभिनोऽत्र अच्छिनोऽत्र‡ ॥ अपृक्तहल्लोपयोः कृतयोरेते विधयो न प्राप्नुवन्ति । प्रत्ययलक्षणेन भवन्ति ।

नैतानि सन्ति प्रयोजनानि । स्थानिवद्भावेनाप्येतानि सिद्धानि । न सिध्यन्ति । आदेशः स्थानिवदित्युच्यते । न च लोप आदेशः । लोपोऽप्यादेशः । कथम् ? आदिश्यते यः स आदेशः, लोपोऽप्यादिश्यते । दोषः खल्वपि स्याद्यदि लोपो नादेशः स्यात् । इह 'अचः परस्मिन् पूर्वविधौ' [ १ । १ । ५७ ] इत्येतस्य भूयिष्ठानि लोप उदाहरणानि तानि न स्युः ।

यत्र तर्हि स्थानिवद्भावो नास्ति, तदर्थमयं योगो वक्तव्यः । क्व च स्थानिवद्भावो नास्ति ? योऽल्विधिः । किं प्रयोजनम् ? प्रयोजनं ङौनकारलोपेत्वेम्विधयः ।

---

प्र०—'अर्तिपिपर्त्योश्चे'तीत्वम् । अभ्यासस्यासवर्णे इतीयङ् । औन इति । उन्देलङ् सिप् श्नम् श्नान्नलोपः दश्चेति रुत्वम् ।

न च लोप इति । दिशिरुच्चारणक्रियो, न च लोप उच्चार्यते, अभावरूपत्वात् । लोपोऽपीति । प्रतिपादनक्रियोऽत्र दिशिरिति भावः ।

---

उ०—प्रवृत्तेरिति भावः । यदीत्यनेन विषयभेदादपवादत्वमेव नास्तीति सूचितम् । यदि तु 'नुड्विषये रप्रतिषेधो वक्तव्य' इत्यादिसात्मिकभाष्येण विषयभेदेऽप्यपवादत्वं तर्हि प्रत्ययलोपस्थलेऽनुत्पत्तिरेवान्वाख्यायते इति सरूपसूत्रस्थभाष्ये उक्तत्वेनापवादत्वसंभावनैव नेत्याहुः । इतीयङिति । ततो गुणेऽपृक्तलोपेऽडाटाविति भावः । आडागमे रूपान्तरेण तत्तच्छास्त्रनिमित्तविघातात् केनापि कार्येणाऽनयोर्न यौगपद्यमिति भावः । 'लावस्थायाम'डितिपक्षेऽपि बहुलं छन्दस्यमाङ्योगेऽपीति बाहुलकादत्रैवमेव प्रक्रिया बोध्या । 'अभिनोऽत्रे'त्यात्रापीकारलोपापृक्तलोपाभ्यां श्नमो यौगपद्याऽसम्भवेन परत्वाल्लोपे तस्य अप्रवृत्तिरिति बोध्यम् ।

भाष्ये—प्रयोजनं क्वाचिति । सूत्रारम्भवादी । प्रत्याख्यानवाद्याह—भसंज्ञेत्यादि । सूत्रारम्भवाद्याह—

---

* मृजेर्वृद्धिः ७ । २ । ११४  + सर्वनामस्थाने चासम्बुद्धौ ६ । ४ । ८

× लुङ्लङ्लृङ्क्ष्वडुदात्तः, आडजादीनाम् ६ । ४ । ७१; ७२  ‡ रुधादिभ्यः श्नम् ३ । १ । ७८

१—इत उत्तरं क्वचिन्मुद्रितपुस्तकेष्वयं पाठोऽधिक उपलभ्यते—

"ङौ नकारलोपत्वेम्विधयः प्रयोजयन्ति । ङौ नकारलोपस्तावत्—'आर्द्रे चर्मन्' 'लोहिते चर्मन्' । स्थानिवद्भावः 'अनल्विधौ" इति वचनान्न प्राप्नोति । प्रत्ययलक्षणेन तु यचीति भसंज्ञा सिद्धा भवति ॥

## भसंज्ञाङीप्ष्फगोरात्वेषु च दोषः ॥ १५ ॥

भसंज्ञाङीप्ष्फगोरात्वेषु च[1] दोषो भवति[2] । भसंज्ञायां तावन्न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'न प्रत्ययलक्षणेन भसंज्ञा भवती'ति, यदयं 'न ङिसंबुद्ध्योः' [ ८ । २ । ८ ] इति ङौ प्रतिषेधं शास्ति ।

---

प्र०—अणयोऽकार इति । अकारेणाऽणन्तं न विशेष्यते, किं तर्ह्यणेव, सर्वस्याण् अकार एवेति विशेषणसामर्थ्याच्छ्रूयमाणाऽकाररूपादण इति विज्ञायते । अथवाऽण्योकार इति अणाऽकारो विशेष्यते वर्णनिमित्तो ङीप्, न तु प्रत्ययनिमित्त इति प्रत्ययलक्षणाऽभावः । यञ्योऽकार इति । अकारावयव इत्यर्थः । अथवा—यञवयवे यञ्शब्दोऽत्र वर्तते । यञवयवो योऽकार इत्यर्थः । पूर्ववदेतदपि व्याख्येयम् । अच्यमीति । अच् प्रधानं, तद्विशेषणममीति तदादिविध्यभावः । तत्र वर्णनिमित्तमात्वम्, न प्रत्ययनिमित्तमिति दोषाऽभावः ।

---

उ०—भसंज्ञायां तावदिति । यदयं न ङीति । अङ्गाधिकारप्रतिनिर्देशपक्षेऽयं ज्ञापकोपन्यासः । अकारेणाऽणन्तमिति । तद्धि जातेरस्त्रीत्यादेराखुरित्यादौ व्यावृत्तये आवश्यकम् । ननु प्रत्ययग्रहणसामर्थ्येन प्रधानतया प्रत्ययत्वेन प्रत्ययस्य यत्र निमित्तता तत्रैवाऽलिविध्यर्थमिदम् । एवं चाकाररूपो योऽणित्यर्थेऽपि प्रत्ययलक्षणं दुर्वारमत आह—विशेषणेति । वस्तुतोऽकार एव विशेष्य इत्याह—अणेति । ननु प्रत्ययनिमित्त इति । प्राधान्येन प्रत्ययनिमित्त इत्यर्थः । अज्झलात्मकयञोऽकारेण सामानाधिकरण्याऽसंभवादाह—अकारावयवेति । बहुव्रीहिः । अस्य विशेषणत्वे इदम् । 'गुणे त्वन्याय्यकल्पने' ति न्यायादिति भाव । नन्वेवं सति मत्यादिष्वतिप्रसङ्गवारणायाऽऽज्ञायत इत्यत्र मुख्यार्थस्योत्तरत्र लक्षणाया वैरूप्यं स्यादतो व्याख्यानान्तरमाह – अथवेति । तद्विशेषणमिति । अमोऽवयवेऽच्चीत्यर्थ इति भावः ।

---

इत्त्वम्—आशीः । स्थानिवद्भावः 'अनल्विधौ' इति वचनान्न प्राप्नोति । प्रत्ययलक्षणेन तु हलीतीत्त्वं सिद्धं भवति ॥ इम्—अतृणेट् । स्थानिवद्भावः 'अनल्विधौ' इति वचनान्न प्राप्नोति । प्रत्ययलक्षणेन तु हलीतीम् सिद्धो भवति ।"

प्रामाणिकपुस्तकेष्वदर्शनात्, 'तस्य दोषो ङौ नकारलोपेत्त्वेम्विषयः' ॥ १३ ॥ इति वार्तिकविवरणे चास्य विषयस्योक्तत्वादिह पाठो न मनोरमः ।

१—'च' क्वचिन्न पठ्यते । २—अतोऽग्रेऽयं पाठः क्वचिदधिक उपलभ्यते—

"भसंज्ञा—राज्ञः पुरुषो राजपुरुषः । प्रत्ययलक्षणेन तु यचीति भसंज्ञायां 'नलोपः प्रातिपदिकान्तस्य' इति नलोपो ( न ) प्राप्नोति । स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति ।

ङीप्—चित्रायां जाता चित्रा । प्रत्ययलक्षणेन त्वणन्तादितीकार' प्राप्नोति । स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति ।

ष्फ—वतण्डी । प्रत्ययलक्षणेन तु यञन्तादकारान्तादिति ष्फः प्राप्नोति । स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति ।

गोरात्वम्—गामिच्छति गव्यति । प्रत्ययलक्षणेन 'औतोम्शसोः' इत्यात्वं प्राप्नोति । स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति ।"

ङीप्यपि नैवं विज्ञायते—अणन्तादकारान्तादिति । कथं तर्हि ? अणयोऽकार इति ।

ष्फेऽपि नैवं विज्ञायते—यञन्तादकारान्तादिति । कथं तर्हि ? यञ्योऽकार इति ।

गोरात्वेऽपि नैवं विज्ञायते—अमि अचीति । कथं तर्हि ? अच्यमीति ।

प्रयोजनान्यपि तर्हि तानि न सन्ति । यत्तावदुच्यते—ङौ नकारलोप इति, क्रियत एतन्न्यास एव—'न ङिसंबुद्ध्योरिति'।

इत्त्वमपि—वक्ष्यत्येतत् 'शास इत्त्व आशासः क्वौ' इति† ।

इम्विधिरपि—हलीति निवृत्तम् । यदि हलीति निवृत्तं, तृणह्यानि अत्रापि प्राप्नोति । एवं तर्हि—'अचि ने'त्यप्यनुवर्तिष्यते‡ ।

न तर्हीदानीमयं योगो वक्तव्यः ? वक्तव्यश्च । किं प्रयोजनम् ? प्रत्ययं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन यथा स्यात् । शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन

---

प्र०—**क्रियत एतदिति** । त्वयापि ज्ञापनार्थमवश्य वक्तव्यमित्ति भावः ।

**शास इत्त्वे इति** । कृतेऽप्यस्मिन् सूत्रे नियमार्थमेतद्वक्तव्यमाशास्ते इत्यादौ मा भूत् । अकृते तु विध्यर्थम् । आशास्त इत्यादौ तु न भवति, शासु अनुशिष्टावित्यस्यैव तत्र ग्रहणात् ।

**प्रत्ययं गृहीत्वेति** । स्थानिवद्भावेन सिद्धे सत्यय योगो नियमार्थः । प्रत्यय एव यस्य लक्षणं तत्प्रत्ययलोपे यथा स्यात् । 'सोर्मनसी' इत्यत्र त्वनिनस्मन्ग्रहणानि चेति वचनादस्प्रत्ययश्चाऽप्रत्ययश्च गृह्यते इति सुदृषदित्यत्राऽपि स्थानिवद्भावाऽभावादुत्तरपदाद्युदात्तत्वाऽभावे

---

उ०—एवं प्रत्याख्यानवाद्युक्तदोषेषु परिहृतेषु प्रत्याख्यानवाद्याह—**प्रयोजनान्यपीत्यादि** । **ज्ञापनार्थमिति** । 'प्रत्ययलक्षणेन भत्वं नेत्यस्ये'ति शेषः । 'न लुमता तस्मिन्नि'त्यनाश्रित्येदम् ।

**अकृतेत्विति** । परस्मैपदिविहिताङ्साहचार्यात् शासुधातोरेव ग्रहणं तत्रेति पक्षे विध्यर्थम् । नन्वेवमप्याशीरित्याद्यसिद्धिरिति चेत् । अत्राहुः । **शास इदिति** सामान्यसूत्रम् । ततोऽङि । अजादौ चेदङ्येवेति नियमार्थमिदम् । एवं च सूत्रे हल्ग्रहणं मास्त्विति मित्रशीरित्यादिसिद्धिः । **आशासः क्वाविति** त्वत्र शासेरेव ग्रहणे विध्यर्थम् । अन्यथा नियमार्थमिति आशास्ते इत्यादौ न दोष इति ।

अथ वार्तिकोक्तविध्यर्थत्वे दूषिते भाष्यकृन्नियमार्थं सूत्रमिति प्रश्नपूर्वकमाह—**न तर्हीत्यादि** । **प्रत्ययं गृहीत्वेति** । प्रत्ययत्वतद्व्याप्यधर्मपुरस्कारेण यदुच्यत इत्यर्थः । **शब्दं गृहीत्वेति** । उक्तधर्मातिरिक्तपुरस्कारेण यदुच्यत इत्यर्थः । ननु शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन मा भूत्स्थानिवत्त्वेन तु स्यादत आह—**स्थानिवदिति** । **प्रत्यय एवेति** । उक्तोऽर्थः । एतदर्थमेव द्वितीयं प्रत्ययपदम् । न चाऽसोभोषसी इति पर्युदासेन श्रूयमाणाऽसन्तस्यैव ग्रहणमिति नियमो व्यर्थ इति वाच्यम् । पर्युदासेन प्रत्ययाऽसन्तस्यैव

---

† शास इदङ्हलोः ६ । ४ । ३४ वा० १ ‡ नाभ्यस्तस्याचि पिति सार्वधातुके ७।३।८७

**मा भूदिति । किं प्रयोजनम् ? शोभना दृषदोऽस्य सुदृषद्ब्राह्मणः+ । 'सोर्मनसी अलोमोषसी' [ ६ । २ । ११७ ] इत्येष स्वरो माभूदिति ॥ ६२ ॥**

## न लुमताङ्गस्य ॥ १ । १ । ६३ ॥

### लुमति प्रतिषेध एकपदस्वरस्योपसङ्ख्यानम् ॥ १ ॥

**लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानं कर्तव्यम् । एकपदस्वरे च लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् । किमविशेषेण ? नेत्याह ।**

प्र०—नञ्सुभ्यामित्यन्तोदात्तत्वं भवति । तत्र चोत्तरपदादिरित्यधिकारादसन्तमुत्तरपदं गृह्यते इति सुदृषदित्यत्रापि स्थानिवद्भावादसन्तत्वमुत्तरपदस्य स्यात् ॥ ६२ ॥

**न लुमताङ्गस्य । लुमतीति ।** लुमत्संज्ञया प्रतिपादितमदर्शनं लुमत्, तत्र यः प्रतिषेध-स्तस्मिन्नित्यर्थः । **एकपदस्वरस्येति ।** एकपदाश्रयो यः स्वरस्तस्येत्यर्थः । यस्तु 'पदस्य पदा'दिति पदद्वयाश्रयः स्वरः, तत्र प्रत्ययलक्षणं भवत्येव, दधि तिष्ठतीति । 'तिङ्ङतिङ' इति निघातः । 'अङ्गस्ये'त्यङ्गाधिकारनिर्देशात् ञ्नित्ति कित्स्वरस्य चाऽनाङ्गत्वात्प्रतिषेधस्याऽप्राप्तिरिति भावः ।

उ०—ग्रहणापत्तौ सुव इत्यादौ स्वरानापत्तेरिति भाष्याशयात् । ननु स्थानिनिमित्तं यदन्यस्य कार्यं तत्स्था-निवत्त्वेन लोपेऽपि, न तु तस्यैव । असतो वचनशतेनापि कार्यित्वाऽप्रतिपादनात् । इह चाऽसत एव कार्यित्वमत आह—**सत्र चेति । सोर्मनसी इति सूत्रे इत्यर्थः** ॥ ६२ ॥

**न लुमता ।** लोपक्रियानिरूपिता करणे तृतीया । यद्यपि लुशब्दयोगात्संज्ञा लुमद्वाच्या । न च तत्रायं प्रतिषेधः किंतु तत्प्रतिपादिताऽदर्शने । एवं च 'लुमति प्रतिषेध इत्यनुपपन्नम् । तथापि वाचकधर्मस्य वाच्य उपचार इत्याह **लुमदिति ।** ननु सर्वोऽपि स्वरः कार्यित्वेनैकमेव पदं गृह्णातीत्यत आह—**एकेति ।** 'सर्वामन्त्रिते'त्यत्रामन्त्रितपदेनाष्टमिकमपि ग्रहीतुं शक्यमिति 'पदस्य पदा'दित्यधिकारेऽनन्तरमप्यामन्त्रित-स्येत्युल्लङ्घ्य व्यवहितमुदाहरति—**दधीति । अङ्गस्येत्यधिकारेति ।** वस्तुतस्तदनिर्देशेऽप्यावश्यकमेतत् । तथाहि—सौवरीणां सप्तमीनां 'भीह्रीमदे'ति सूत्रे 'प्रत्ययात्पूर्व'मिति पूर्वग्रहणेन तदन्तसप्तमीत्वस्य षाष्ठभाष्ये तत्सूत्रे एवोक्तत्वेन स्वराणां प्रत्यये परतः पूर्वकार्यत्वाऽभावात् । कित्स्वरे षष्ठ्या एव सत्त्वाच्च । ननु 'संज्ञायामुपमान'मिति 'उपमानशब्दः संज्ञायामाद्युदात्त' इत्यर्थकं कनो लुपि चञ्चेव चञ्चेत्यादावाद्युदात्त-साधकं 'ञ्नित्यादि'रित्येव सिद्धे व्यर्थं सदनुबन्धलक्षणे स्वरे प्रत्ययलक्षणाऽभावज्ञापकमिति तत्सूत्रे भाष्ये स्पष्टम् । तेनेदं विरुध्येतेति चेन्न । प्रकृतसूत्रे वार्त्तिकव्याख्यानमात्रं, षष्ठे तु प्रत्याख्यातानीमानीत्यविरोधात् । अत एव तत्र भाष्ये पथिमाथस्वरार्थं वचनं कर्तव्य'मित्युक्तम् । एवं च तदर्थस्यात्रत्यवचनस्य कर्त्तव्यत्वं वदताऽन्येषामकर्त्तव्यत्वमर्थादुक्तमेव । एतेन 'भीह्री'ति ज्ञापकं विशेषापेक्षं सप्तम्यर्थग्रहणे तदन्तग्रहणे च यत्र फलभेदस्तद्विषयम् । एवं चोपोत्तमं रितीत्यादावेव तत्प्रवृत्तिरिति न ञ्नित्यादिरित्यादौ तत्प्रवृत्तिरिति कैयटा-शय इति परास्तम् । 'संज्ञायमुपमान'मिति सूत्रस्थभाष्यविरोधात् । तस्माज्ज्ञापकस्य सामान्यापेक्षत्वमेवोचितम् । तत्र सप्तम्या यथाश्रुतत्वे हि न लुमतेति निषेधात्तदप्राप्तौ 'ञ्नितीति' प्रयोजन'मिति भाष्यासङ्गतिः स्पष्टैव । न चाङ्गाधिकारप्रतिनिर्देशपक्षे तद्भाष्यं, सिद्धान्तपक्षे योजयितुं शक्यत्वादिति दिक् ।

+ सुपो धातुप्रातिपदिकयोः २ । ४ । ७१

**सर्वामन्त्रितसिज्लुक्स्वरवर्जम् ॥ २ ॥**

**सर्वस्वरमामन्त्रितस्वरं सिज्लुक्स्वरं च वर्जयित्वा ।**

**सर्वस्वर—सर्वस्तोमः सर्वपृष्ठः× । 'सर्वस्य सुपि' [ ६ । १ । १६१ ] इत्याद्युदात्तत्वं यथा स्यात् ।**

**आमन्त्रितस्वर—सर्पिरागच्छ सप्ताऽऽगच्छत । 'आमन्त्रितस्य च' [ ६ । १ । १९८ ] इत्याद्युदात्तत्वं यथा स्यात् ।**

**सिज्लुक्स्वर—मा हि दाताम्, मा हि धाताम् । 'आदिः सिचोऽन्यतरस्याम्' [ ६ । १ । १८७ ] इत्येष स्वरो यथा स्यात् । किं प्रयोजनम् ?**

**प्रयोजनं ञिनिकिल्लुकि स्वराः ॥ ३ ॥**

**ञिनिकित्स्वरा लुकि प्रयोजयन्ति । गर्गाः वत्साः, बिदा उर्वाः* । उष्ट्रग्रीवाः**

प्र०—**सर्वस्तोम इति** । 'सर्वस्य सुपी'ति यदाद्युदात्तत्वं, तदेव 'बहुव्रीहौ प्रकृत्ये'ति विधीयत इत्येकपदस्वरो भवत्येव ।

**सर्पिरिति** । सर्पिः शब्दोऽन्तोदात्तः प्रत्ययस्वरेण, घृतादित्वाद्वा । सप्तन्शब्दोऽपि घृतादित्वादन्तोदात्तः । नित्स्वरेण त्वाद्युदात्तत्वे विशेषो न स्यात् ।

**मा हि दातामिति** । 'गातिस्थाघ्वि'ति सिचो लुक् । लेरेव लुकि विधातव्ये सिचो लुग्विधानं प्रत्ययलक्षणार्थम् ।

**ञिनिकिल्लुकीति** । इकार उच्चारणार्थः । ञ्नित्किनां प्रत्ययानां लुकि कृते स्वरा निवर्त्यमानतया प्रयोजनमिति पदानां सम्बन्धः । भाष्यकारस्तु वस्त्वर्थं व्याचष्टे—**ञिनिकित्स्वरा**

उ०—षष्ठीसमासादौ परत्वात्सतिशिष्टत्वाच्च समासान्तोदात्तत्वस्यैव प्राप्तेर्भाष्ये **सर्वस्तोम** इति बहुव्रीहिरुदाहृतः । तत्र बहुव्रीहिस्वरस्य द्विपदाश्रयत्वात्प्रतिषेधस्यैवाप्राप्तेः कथं तदपवादे इदमुदाहरणमत आह—**सर्वस्येति** । **विधीयत इति** । अपवादनिवर्त्तनेन व्यवस्थाप्यत इत्यर्थः ।

**प्रत्ययस्वरेणेति** । इसिप्रत्ययान्तत्वादिति भावः । **नब्विषयस्ये**त्यस्य तु न प्राप्तिः, 'अनिसन्तस्ये'ति पर्युदासात् । घृतादित्वकल्पनं तु किमर्थमिति चिन्त्यम् । **नित्स्वरेणेति** । सप्तन्शब्दो हि 'सप्यशूभ्यां तुट् चे'ति कनिन्नन्तः । 'अः सङ्ख्याया' इत्यप्याद्युदात्तत्वं प्राप्नोतीति द्रष्टव्यम् ।

'माहिदाता'मित्यत्राद् प्रतिषेधाय माङ् । हिशब्दो **हि चेति** निघातप्रतिषेधार्थः । सिज्लुक्स्वरवर्जनं न कार्यमित्याह—**लेरिति** । **मालीत्यनेन** ल्लेरेव लुकि 'मन्त्रे घसे'त्यत्र पुनर्लिग्रहणं न कार्यम् । लुग्विधानात इत्येतच्च विध्यर्थं स्यादिति लाघवमिति भावः । **प्रत्ययलक्षणार्थमिति** । प्रत्ययलक्षणेन सिन्निमित्तकार्यार्थमित्यर्थः ।

ननु **ञिनिकित्स्वरा** इति भाष्यदर्शनाञ्ञिनिकितां स्वरविशेषणत्वेन लुका समासोऽनुपपन्न इत्यत आह—**ञ्नित्किताममिति** । 'प्रयोजयन्ती'त्यस्य कर्माकाङ्क्षायामाह—**प्रतिषेधमिति** । **लुकीति** । वार्त्तिके

× सुपोधातुप्रातिपदिकयोः २ । ४ । ७१; बहुव्रीहौ प्रकृत्या पूर्वपदम् ६ । २ । १

* यञञोश्च २ । ४ । ६४

वामरज्जुः† । 'ञ्निति' इत्याद्युदात्तत्वं मा भूदिति‡ । इह च अत्रयः+ 'कितः' [ ६ । १ । १६५ ] इत्यन्तोदात्तत्वं मा भूदिति ।

**पथिमथोः सर्वनामस्थाने [ लुकि ] ॥ ४ ॥**

पथिमथोः सर्वनामस्थाने लुकि प्रयोजनम् । [ लुमता¹ लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् ] । पथिप्रियः मथिप्रियः× । 'पथिमथोः सर्वनामस्थाने, [ ६ । १ । १९९ ] इत्येष स्वरो मा भूदिति ।

**अह्नो रविधौ ॥ ५ ॥**

अह्नो रविधाने लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् । अहर्ददाति अहर्भुङ्क्ते* । 'रोऽसुपि' [ ८ । २ । ६९ ] इति प्रत्ययलक्षणेन प्रतिषेधो मा भूदिति ।

---

प्र०—इति । 'प्रतिषेध'मित्यध्याहारः । उष्ट्रग्रीवा वामरज्जुरिति । देवपथादित्वात्कनो लुप् । असंज्ञायां चेदमुदाहरणम् । संज्ञायां तु संज्ञायामुपमानमिति भवतिव्यमाद्युदात्तत्वेन । अत्रय इति । 'राशदिभ्या त्रिप्', 'अदेत्रिनिच्चे'ति त्रिबन्तोऽत्रिशब्द आद्युदात्तः ।

पथप्रियो मथिप्रिय इति । पूर्वपदप्रकृतिस्वरेणान्तोदात्तौ पथिमथिशब्दौ भवतः ।

अहर्ददातीति । 'असुपी'ति प्रसज्यप्रतिषेधः । पर्युदासे तु 'दीर्घाहा निदाघ' इत्यत्रापि सुप्सदृशे निदाघशब्दे परतो रत्वं स्यात् । रुत्वं चेष्यते । लोपशब्देन सोर्लुप्तत्वात्प्रत्ययलक्षणेन सुपि नेति रत्वप्रतिषेधाद्रुत्वे यत्वे तस्य च लोपे दीर्घाहा निदाघ इति सिध्यति । लुकि तु प्रत्ययलक्षणप्रतिषेधाद्रत्वे सत्युत्वाऽभावादहर्ददातीत्यादिसिध्यति ।

---

उ०—लुकीत्युपलक्षणमिति भावः । भाष्ये आद्युदात्तत्वं माभूदिति । एवं च प्रातिपदिकादिस्वरेणान्तोदात्तत्वमेति भावः । अत्रिशब्दादितश्चाऽनिञ इति ढकोऽत्रिभृग्विति लुक् । नन्वत्रय इत्यत्र कित्त्वप्रयुक्तान्तोदात्तत्वाभावेऽपि प्रातिपदिकस्वरेण तत्त्वं दुर्वारमत आह—राशदीति । त्रिबन्त इति नान्तस्त्वन्तोदात्त इति भावः । इदं प्रयोजनं कित्तद्धितान्तस्याऽन्त उदात्त इत्यर्थे बोध्यम् । कितः प्रत्ययस्यैवान्तोदात्तत्वे तु प्रत्ययलक्षणेन कार्यिणोऽसम्पादनान्न दोषः । अत एव नत्वनिर्भिन्न इत्यैस्नेत्याहुः ।

पथिमथिशब्दौ इनिप्रत्ययान्ततया प्रत्ययस्वरेण फिषोन्त इति वाऽन्तोदात्तौ । तयोः सर्वनामस्थाननिमित्तमाद्युदात्तत्वमत्रापि स्यादित्यर्थः ।

भाष्ये प्रतिषेधो माभूदिति । तेनाऽपर्युदासत्वं सूचितम् । तदुपपादयति—पर्युदासे तु इति । प्रत्ययत्वेन सुप्सादृश्ये तु अहर्ददातीत्यत्रापि रत्वं न स्यादित्यर्थः । नन्विष्यमाणमपि रुत्वं न प्राप्नोति । प्रत्ययलक्षणनिषेधेन रत्वस्यैव प्राप्तेरत आह—लोपशब्देनेति । हल्ङ्यादिसूत्रेणेति भावः । लुमता लुप्त एव स निषेध इति तात्पर्यम् । 'न लुमता तस्मिन्नि'ति पक्षे तु नेदमावश्यकम् ।

---

† देवपथादिभ्यश्च ५ । ३ । १०० ‡ ञ्नित्यादिर्नित्यम् ६ । १ । १९७

+ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च २ । ४ । ६५ १—इदं क्वचिन्न ।

× सुपो धातुप्रातिपदिकयोः २ । ४ । ७१; बहुव्रीहौ प्रकृत्या पूर्वपदम् ६ । २ । १

* स्वमोर्नपुंसकात् । ७ । १ । २३

## उत्तरपदत्वे चाऽपदादिविधौ ॥ ६ ॥

**उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् । परमवाचा परमवाचे, परमगोदुहा परमगोदुहे, परमश्वलिहा परमश्वलिहे । पदस्य [ ८ । १ । १६] इति प्रत्ययलक्षणेन कुत्वादीनि मा भूवन्निति† ।**

**अपदादिविधाविति किमर्थम् ? दधिसेचौ दधिसेचः—'सात्पदाद्योः' [ ८ । ३ । १११ ] इति प्रतिषेधो यथा स्यात् ।**

**यद्यपदादिविधावित्युच्यत उत्तरपदाधिकारो न प्रकल्पेत । तत्र को दोषः ? 'कर्णो वर्णलक्षणात्' [ ६ । २ । ११२ ] इत्येवमादिविधिर्न सिध्यति ।**

---

**प्र०—उत्तरपदत्वे चेति** । उत्तरपदमुत्तरशब्देनोच्यते, पदैकदेशलोपात् । तेनोत्तरपदस्य पदत्वे पदव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः । **परमवाचेति** । समासार्था या विभक्तिः कृता, तां प्रत्ययलक्षणेनाश्रित्य पदत्वनिबन्धनानि कुत्वादीनि प्राप्नुवन्ति । भसंज्ञा तु यस्माद्यजादिविधिरिति समुदायस्यैव, न त्ववयवस्य । **दधिसेचाविति** । दध्नः सेचाविति षष्ठीसमास. । उपपदसमासे तु प्राक्सुबुत्पत्ते. समासविधानात्सेचशब्दस्य पदसंज्ञाया अभावात्पदादित्वं सकारस्य न स्यात् । अनभिधानाच्च सोपपदाद्विजभावाद्दधिषेचावित्यादिप्रोयोगाऽभावात् ।

**कर्णो वर्णलक्षणादिति** । नन्वपदादिविधावित्युच्यते, स्वरश्चाऽयं पदादिविधिः । ककारोऽत्रादि, नत्वकार इत्यदोष· । स्वरविधौ व्यञ्जनमविद्यमानवत्, न त्वादिव्यपदेशे । सूत्रं चाऽसमासार्थं स्यात् । कर्णशब्दादर्शआदित्वादचि कृते शुक्लः कर्ण इत्याद्युदात्तत्वं यथा स्यात् ।

---

उ०—**'उत्तरपदत्वे चे'ति** सर्वथा कार्यम् । ननु सामान्यत उत्तरस्य पदत्व इत्यर्थे 'परमं चर्मे'त्यत्रापि निषेधापत्तौ नलोपो न स्यादत आह—**उत्तरपदमिति** । अत एव 'बहुपूर्वस्य ने'ति वचनमर्थवदिति भावः । उत्तरपदशब्दश्च समासचरमावयवे रूढ इत्यसमासे नातिप्रसङ्ग इति बोध्यम् । **समासार्थेति** । तत्र **सुप्सु**पेत्यधिकारादिति भावः । **तां**—'सुपो धात्वि'ति लुमाम् । **कुत्वादीनि**—कुत्वघत्वढत्वानि । ननु भत्वेन पदत्वबाधोऽत आह—**यस्मादिति** । तथा च भिन्नावधित्वान्न बाध्यबाधकभाव इति भावः । भाष्ये—**पदस्येतीति** । **'पदस्ये'**त्यधिकृत्य यानि विहितानीत्यर्थः । ननु सोपपदात्सिन्चेर्विचि दधिषेचाविति स्यादेव । न चेष्टापत्तिः । पदादादिरिति पक्षे दुर्लभत्वादत आह—**अनभिधानादिति** । तस्य च्छान्दसत्वादिति भावः ।

भाष्ये **यद्यपदादी**त्येकदेशेन सम्पूर्णं वार्तिकमुपलक्ष्यते । यतः प्रतिषेधस्याऽतिव्याप्तिर्न प्रतिषेधापवादस्येति बोध्यम् । **स्वरश्चेति** । उत्तरपदादिरित्यधिकारादिति भावः । नन्वसमासे 'स्वाङ्गशिटा'मिति कर्णस्याद्युदात्तत्वं सिद्धमेवेत्यत आह—**कर्णशब्दादिति** । 'एवमादिविधिर्न सिध्यती'ति भाष्यादुत्तरपदादिरित्यधिकारस्यसूत्राणां वैयर्थ्यस्यैव दूषणत्वेन प्रतीतिरित्येके ।

---

† चो: कु: ८ । २ । ३०

यदि पुनर्नलोपादिविधौ प्लुत्यन्ते‡ 'लुमता लुप्ते प्रत्ययलक्षणं न भवती'त्युच्येत । नैव शक्यम् । इह हि राजकुमार्यौ राजकुमार्यै इति शाकलं प्रसज्येत+ । नैष दोषः । यदेतत् 'सिति शाकलं ने'ति, एतत् 'प्रत्यये शाकलं ने'ति वक्ष्यामि+ । यदि 'प्रत्यये शाकलं ने'त्युच्यते, 'दधि अधुना' 'मधु अधुना' × अत्राऽपि न प्रसज्येत । प्रत्यये शाकलं न भवति । कस्मिन्[१] ? यस्माद्यः प्रत्ययो विहित इति ।

इह तर्हि परमदिवा परमदिवे । 'दिव उत्' [ ६ । १ । १३१ ] इत्युत्त्वं प्राप्नोति ।

अस्तु तर्ह्यविशेषेण । ननु चोक्तम्—'उत्तरपदाधिकारो न प्रकल्पेते'ति । वचनादुत्तरपदाधिकारो भविष्यति ।

---

**प्र०—यदि पुनरिति** । तेन पूर्वस्मिन् परत्र च भवत्येव प्रत्ययलक्षणम् । **राजकुमार्याविति** । **इकोऽसवर्णे** इत्यत्रैङः पदान्तादतीत्यतः पदान्तग्रहणमनुवर्तते । तत्र प्रत्ययलक्षणेन पदान्तत्वाच्छाकलप्रसङ्गः । **दधि अधुनेति** । अधुनाप्रत्यय इदमो विधीयते, तत इदम इश् । 'यस्येति चे'ति लोपः । **यस्माद्य इति** । प्रत्यासत्त्येति भावः । राजकुमार्यावित्यत्र यद्यपि समुदायाद्विहितस्तथाप्यवयवादप्यसौ विहित इति बुद्धिर्भवत्येव । समुदायद्विर्वचनेऽवयवद्विर्वचनबुद्धिवत् ।

**उत्त्वमिति** । उत्त्वविधा'वेङः पदान्ता'दिति पदाऽधिकारः ।

**वचनादिति** । समासे ह्युत्तरपदं भवति । न च कर्णशब्दो अच्प्रत्ययान्तोऽस्ति, अर्शआदिषु हि 'स्वाङ्गाद्धीना'दिति पठ्यते । तेन खञ्जादिभ्य एव हीनस्वाङ्गवाचिभ्योऽच्प्रत्ययो भवति । न च कर्णशब्दो हीनस्वाङ्गवाची ।

---

**उ०—प्रत्यासत्त्येति** । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादे'रित्युपस्थित्येति भावः । **तथापीति** । वस्तुतो राजकुमार्यावित्यत्रापि दोषः । समुदायादसौ विहितो नावयवात् । अन्यथा कौरुच्चरेय इत्यादौ चकाराकारस्यापि वृद्धिः स्यात् । **इहतर्हीत्यादिभाष्यं** तु अभ्युपेत्यवादेन । **उत्तरप्रे** तु नोत्तरपदत्वे चेत्यस्य प्रवृत्तिः । अत एव पूर्वत्रैव दोषेणेदं दूषितं भगवतेति बोध्यम् । **उमोह्रस्वा**दिति सूत्रस्थभाष्यं त्वेकदेश्युक्तिरिति न दोष इति तत्रैव निरूपयिष्यामः ।

समासचरमावयवे उत्तरपदशब्दो रूढ इत्यभिप्रेत्याह—**समासे हीति** । न तु पदत्वमपि तद्व्यवहारे प्रयोजकमित्यर्थः । केवलरूढत्वे मानमुक्तम्, तुष्यतु दुर्जनन्यायेन केवलयोगेऽप्याह—**न च कर्णेति** । राजवाचककर्णशब्दस्य तु 'अभिव्यक्तपदार्था ये' इति न्यायान्न तत्र ग्रहणमिति भावः । काश्यपिनावित्यादौ 'छन्दोब्राह्मणानी'ति तद्विषयताबोधकशास्त्रबलात् सुबुत्पत्तेः प्रागेव तद्धित इति न दोषः ।

---

‡ नलोपः प्राति०; वाक्यस्य टेः प्लुत उदात्तः ८ । २ । ७; ८२ + इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६ । १ । १२७ × अधुना ५ । ३ । १७ १—'कतरस्मिन्' पाठान्तरम् ।

तर्हि वक्तव्यम् ? न वक्तव्यम् । अनुवृत्तिः करिष्यते । इदमस्ति 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' [ १ । ४ । १३ ], 'सुप्तिङन्तं पदम्' [ १४ ], यस्मात्सुप्तिङ्विधिस्तदादि सुबन्तं च । 'नः क्ये' [ १५ ] । नान्तं क्ये पदसंज्ञं भवति, यस्मात् क्यविधिस्तदादि सुबन्तं च । 'सिति च' [ १६ ] । सिति च पूर्वं पदसंज्ञं भवति, यस्मात्सिद्विधिस्तदादि सुबन्तं च । स्वादिष्वसर्वनामस्थाने' [ १७ ] । स्वादिष्वसर्वनामस्थाने पूर्वं पदसंज्ञं भवति, यस्मात्स्वादिविधिस्तदादि सुबन्तं च । 'यचि भम्' [ १८ ] । यजादिप्रत्यये पूर्वं भं भवति, यस्माद्यजादिविधिस्तदादि सुबन्तं च ।

इह तर्हि परमवाक् । 'असर्वनामस्थाने' इति प्रतिषेधः प्राप्नोति । अस्तु तस्याः प्रतिषेधः—या स्वादौ पदमिति पदसंज्ञा, या तु 'सुबन्तं पद'मिति पदसंज्ञा सा भविष्यति । सत्येतत्प्रत्यये आसीदनया भविष्यत्यनया न भविष्यतीति । लुप्त इदानीं प्रत्यये यावत एवावधेः स्वादौ पदमिति पदसंज्ञा, तावत एवावधेः सुबन्तं पदमिति । अस्ति च प्रत्ययलक्षणेन सर्वनामस्थानपरतेति कृत्वा 'प्रतिषेधाश्च बलीयांसो

प्र०—तर्हीति । 'उत्तरपदत्वे चापदादिविधा'वित्येतत् । यचि भमिति। ततश्च परवाचेत्यत्र वाक्शब्दस्य भत्वात्पदत्वाऽभावः ।

इह तर्हीति । 'असर्वनामस्थाने'इति प्रसज्यप्रतिषेधं मन्यते । ततश्च सर्वनामस्थाने परतो यस्मात् स्वादिविधिस्तदादि सुबन्तं च पदसंज्ञं न भवतीति प्रत्ययलक्षणेन सर्वनामस्थानपरत्वात्

उ०—भाष्ये—नः क्ये इत्यादि तदादि सुबन्तं चेति । 'यस्मात्प्रत्ययविधि'रिति अवश्यमुत्तरत्रानुवर्त्यं परमैश्चतुर्भिरित्यादौ परमघटितसमुदायस्य पदत्ववारणाय । तत्त्वे हि 'फल्युपोत्तम'मिति परमैरित्यस्यापि निघातापत्तिः । एवं च तस्य 'नः क्ये' इत्यत्रापि संबन्धे यस्मात् क्यविधिस्तदादि यदि क्ये तन्निमित्तान्तर्वर्तिसुपा पदं तदा नान्तमेवेति नियमः स्यात् । तथा च 'परमवाच्यती'त्यादावव्ययववाक्शब्दस्य पदत्वेन कुत्वं स्यात् । सूत्रं तु समिध्यतीत्येतद्व्यावृत्त्यर्थं स्यादिति सुबन्तमित्यपि संबध्यत इति भावः । तस्य च 'मध्ये चेत् सुबन्तं तदा तदपि नान्तमेव पद' मित्यर्थः । अन्वाचयशिष्टं च सुबन्तमिति सर्वत्र । संनियोगशिष्टत्वे 'षड्भ्य' इत्याद्यसिद्धिः । 'सिति चे'त्यत्र यद्यपि नास्त्योपयोगोऽवयवसुबन्ताऽप्रसिद्धेः, तथापि उत्तरत्रानुवृत्तिं दर्शयितुं तत्रापि तत्संबन्धो दर्शितः । व्यपदेशिवद्भावेन कथंचिदन्वयः संपाद्यः । एवं 'स्वादिष्वि'ति सूत्रेऽपि तदनुवृत्तिकरणमुत्तरार्थमेव । 'यचि भ'मित्यत्रापि पदसंज्ञया तुल्यावधिकत्वसिद्ध्यर्थं यस्मादित्याद्यनुवर्त्यमिति बोध्यम् ।

संज्ञिनां भेदादिति । सति सौ तदन्तस्य 'सुबन्त'मिति पदत्वम् । तत्प्राग्भागस्य स्वादिष्वितीति भावः । ननु अपरनिमित्तकत्वेनान्तरङ्गतया सुबन्तमिति पदत्वं स्यादत आह भाष्ये—प्रतिषेधाश्चेति । विध्युन्मूलनं—प्राप्तस्य विधेर्निवर्चनम् । एवं चापवादन्यायेनाप्यन्तरङ्गाऽसंभव इति भावः । अत्राऽनुवर्तमानं

भवन्ती'ति प्रतिषेधः प्राप्नोति ।

नाऽप्रतिषेधात् । नायं प्रसज्यप्रतिषेधः—सर्वनामस्थाने नेति । किं तर्हि ? पर्युदासोऽयम्—यदन्यत्सर्वनामस्थानादिति । सर्वनामस्थानेऽव्यापारः । यदि केनचित्प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति ।

अप्राप्तेर्वा । अथवा—अनन्तरा या प्राप्तिः सा प्रतिषिध्यते । कुत एतत् ? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति । ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् ।

यद्येवं परमवाचौ परमवाच इति । 'सुप्तिङन्तं पद'मिति पदसंज्ञा प्राप्नोति । एवं तर्हि योगविभागः करिष्यते—'स्वादिषु पूर्वं पदसंज्ञं भवति । ततः—'सर्वनामस्थाने अयचि' पूर्वं पदसंज्ञं भवति । ततो–'भम्' भसंज्ञं भवति यजादावसर्वनामस्थान इति ।

यदि तर्हि सावपि पदं भवति, एचः प्लुतविकारे पदान्तग्रहणं चोदयिष्यति*, इह मा भूत्—भद्रं करोषि गौरिति, तस्मिन् क्रियमाणेऽपि प्राप्नोति । वाक्यपदयोर-

प्र०—पदत्वप्रतिषेधात् कुत्वाऽप्राप्तिः । सत्येतदिति । अवधिभेदात्संज्ञिनां भेदात् । बलीयांस इति । विध्युन्मूलनरूपत्वात् ।

एवं तर्हीति । योगविभागे सति सर्वा प्राप्तिः प्रतिषिद्ध्यत इति दोषाऽभावः । 'असर्वनामस्थाने' इति नञः क्रियापदेन सम्बन्धादुत्तरपदेनाऽसम्बन्धो, यचीत्येतच्च सर्वनामस्थानविशेषणम् । तेनायमर्थो भवति—यजादौ सर्वनामस्थाने परतः पदसंज्ञा न भवतीति । हलादौ तु सुशब्दे भवत्येव । भाष्ये तु वस्तुमात्रमुपन्यस्तं—'सर्वनामस्थाने अयचीति । यजादौ सर्वनामस्थाने पदसंज्ञानिषेधात्सामर्थ्यादयमर्थः संपद्यते—अयजादौ सर्वनामस्थाने पदसंज्ञा भवतीति ।

वाक्यपदयोरिति । गौरित्यौकारो वाक्यान्तो न भवतीत्यादुतौ न भवतः ।

उ०—'सुबन्त'मित्यपि 'स्वादिष्वि'तिसूत्रेण तदनुवृत्त्या मध्यस्य सुबन्तस्य यत्प्राप्तं तन्निषेधकम्, न तु 'सुबन्त'-मिति सूत्रप्राप्तस्येति बोध्यम् ।

भाष्ये—नोत्सहत इति । स्वयमप्रवर्तमाना कथमन्यं बाधेतेति भावः ।

ननु सर्वनामस्थानेऽयचीति न्यासस्य पदत्वनिषेधकत्वेऽनन्तरस्येति न्यायेन स्वादिष्वित्यस्यैव निषेधे परमवाचावित्यादौ सुबन्तमिति पदत्वं स्यादत आह—योगविभागे इति । एवं च तत्सामर्थ्यादनन्तरस्येति न्यायबाध इति भावः । यचीत्यस्यपुरस्तादपकर्षफलमाह— हलादाविति । वस्तुमात्रम्—अर्थसिद्धोऽर्थः । तत्फलं नञः सर्वनामस्थानपदेनाऽसंबन्धप्रदर्शनम् ।

भाष्ये–प्लुतविकारे इति । प्लुतसहितविकारे इत्यर्थः । एचोऽप्रगृह्यस्याऽदूराद्धूते पूर्वस्यार्द्धस्यादुत्तर-

* एचः प्लुतविकारे पदान्तग्रहणम् ८ । २ । १०७ वा० १

न्त्यस्येत्येवं तत् ।

इह तर्हि—दधिसेचौ दधिसेचः, 'सात्पदाद्यो'रिति पदादिलक्षणः षत्वप्रतिषेधो न प्राप्नोति । मा भूदेवम्—पदस्यादिः पदादिः, पदादेर्नेति । कथं तर्हि ? पदादादिः पदादिः, पदादेर्नेत्येवं भविष्यति । नैवं शक्यम् । इहापि प्रसज्येत—ऋचु वाचु त्वचु कुमारीषु किशोरीष्विति । सात्प्रतिषेधो ज्ञापकः—'स्वादिषु पदत्वेन येषां पदसंज्ञा, न तेभ्यः प्रतिषेधो भवतीति ।

इह तर्हि—बहुसेचौ बहुसेचः । बहुजयं प्रत्ययः । अत्र पदादादिः पदादिः पदादेर्नेत्युच्यमानेऽपि न सिध्यति । एवं तर्हि—'उत्तरपदत्वे च पदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं भवती' ति वक्ष्यामि । तन्नियमार्थं भविष्यति—'पदादिविधावेव, न पदान्तविधा'विति ।

कथं बहुसेचौ बहुसेचः ? बहुच्पूर्वस्य च पदादिविधावेव, न पदान्तविधाविति ।

प्र०—पदादादिरिति । 'पञ्चमी'ति योगविभागात्समासः ।

कथंबहुसेचाविति । समासाऽभावान्नोत्तरस्यपदत्वम्, नापि पूर्वस्य पदत्वम् ।

उ०—स्येदुता'वित्यत्रेति भावः ।

भाष्ये—इह तर्हीति । वार्तिकारम्भे त्वपदादिविधावित्युक्तेर्न दोषः । प्रत्याख्याने तु दोषः । कुत्वाऽभावाय पदत्वनिषेधप्रवृत्तेरावश्यकत्वात् । एतेन योगविभागसिद्धस्य काचित्कत्वान्न दोष इत्यपास्तमिति भावः । पञ्चमीति योगविभागादिति । 'पदा'दित्यस्य परशब्दान्वयेनाऽसामर्थ्यादत्र समासशास्त्राऽप्राप्तेः सौत्रः समास इति वक्तुमुचितम् । भाष्ये—न तेभ्यः प्रतिषेध इति । तेभ्यः परस्य 'सुबन्तं पद'मिति पदत्वमाश्रित्याऽपि न प्रतिषेध इत्यर्थः । अत एव परमवाचु इत्यादावपि न दोषः ।

भाष्ये—पदादादेर्नेत्युच्यमानेऽपीति । षष्ठीतत्पुरुषेऽपि न सिध्यति, कुत्वाऽभावाय पदत्वाऽभावस्यावश्यकत्वादित्यपेरर्थः । अयं बहुसेचि दोषो वार्तिकारम्भेऽपि, उत्तरपदत्वाऽभावेन निषेधाऽप्राप्त्या पदत्वसत्त्वेन षष्ठीतत्पुरुषेण षत्वनिषेधसाम्राज्येऽपि कुत्वप्राप्तेः । इदानीं प्रत्याख्यानप्रकारस्य गौरवदुर्गे यत्वाभ्यामयुक्तत्वं मनसि निधाय लाघवाय नञ्रहितवचनपाठमाह—एवं तर्हीति । न पदान्तविधाविति । पदान्तस्थानिके विधावित्यर्थः । नञ्घटितवार्तिकस्याप्यत्रैव प्रवृत्तिर्व्याख्यानादेकफलत्वायेति बोध्यम् ।

न पदान्तविधाविति प्रतिनिर्देशादुत्तरपदत्वेचेत्यस्य वार्तिकस्य ङमुडादिविधौ णत्वादिविधौ चाऽप्रवृत्तिरिति बोध्यम् । ङमुट्सूत्रस्थभाष्यं त्वेतद्विरोधादुभिच पद इति सूत्रभाष्यविरोधाच्च 'न लोपादिप्लुत्यन्त' इति वार्तिकस्यभाष्यविरोधाच्चैकदेश्युक्तिरिति बोध्यम् । एवं च प्रत्याख्यानप्रकारोऽपि योगविभागस्य काचित्कत्वेन ङमुडादिविषये न । इदमेव ध्वनयितुं प्रत्याख्यातमपि वार्तिकं पुनरत्तरान्तरैरुपात्तमित्याहुः ।

एतावतापि बहुसेचावित्यस्याऽसिद्धिरिति शङ्कते—कथं बहुसेचाविति । तदुपपादयति—समासेति । एवं च नियमाऽप्राप्तौ प्रत्ययलक्षणेन पदत्वात् षत्वनिषेधवत् 'चोः कुः पदान्तस्ये'ति कुत्वं स्यादिति भावः । पञ्चमीसमासेऽपि षत्वापत्तिरित्याह—नापि पूर्वस्येति । भाष्ये—बहुच्पूर्वस्य चेति । आद्यवार्तिकारम्भे तत्प्रत्याख्याने च 'सात्पदाद्यो'रित्यत्रेदं कार्यमिति गूढ आशयः ।

द्वन्द्वेऽन्त्यस्य ॥ ७ ॥

द्वन्द्वेऽन्त्यस्य लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् । वाक्स्रक्त्वचम्[1] ।

इहाऽभूवन्निति† प्रत्ययलक्षणेन जुस्भावः प्राप्नोति‡ ।

सिचि[2] जुसोऽप्रसङ्ग आकारप्रकरणात् ॥ ८ ॥

सिचि सिज्निमित्तस्य जुसोऽप्रसङ्गः । किं कारणम् ? 'आकारप्रकरणात्' । 'आतः' [ ३ । ४ । ११० ] इत्येतन्नियमार्थं भविष्यति—'आत एव च सिज्लुगन्तान्नान्यस्मात्सिज्लुगन्ता'दिति ।

इह—'इति युष्मत्पुत्रो ददाति' 'इत्यस्मत्पुत्रो ददाती'त्यत्र प्रत्ययलक्षणेन 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ' [ ८ । १ । २० ] इति वान्नावादय आदेशा[3]ः प्राप्नुवन्ति ।

युष्मदस्मदोः स्थग्रहणात् ॥ ९ ॥

स्थग्रहणं तत्र क्रियते तच्छ्रूयमाणविभक्तिविशेषणं विज्ञास्यते । अस्त्यन्य-

---

प्र०—द्वन्द्वेऽन्त्यस्येति । 'उत्तरपदत्वे चे'त्यनेनैव सिद्धे नियमार्थमिदमन्त्यस्यैवेति । मध्यमपदस्यापि पूर्वपदापेक्षयोत्तरपदत्वसंभवात्प्रत्ययलक्षणप्रतिषेधप्रसङ्गात् । मुख्ये तूत्तरपदे संभवति कथं मध्यमपदस्य ग्रहणं स्यादिति चिन्त्यमेतत् ।

आकारप्रकरणादिति । आकारस्य नियमार्थत्वेन प्रस्तावादित्यर्थः । अथवाऽऽकारे प्रकरणात्—आत इत्यत्र सिचः प्रकृत्वादित्यर्थः ।

इतियुष्मत्पुत्र इति । पदादुत्तरयोर्युष्मदस्मदोरादेशविधानादितिशब्दप्रयोगः ।

श्रूयमाणविभक्तिविशेषणमिति । षष्ठीचतुर्थीद्वितीयास्वित्येव सिद्धे स्थग्रहणे सत्ययमर्थो भवति । तासु ये त्ववस्थिते युष्मदस्मदी इति । श्रूयमाणासु चाऽवस्थानं भवति, न तु लुप्तासु, लुप्तस्याऽऽधारत्वाऽसंभवात् । अस्त्यन्यदिति । तिष्ठतिरहानावपि वर्तते । यथा—

---

उ०—मुख्येत्विति । उत्तरपदशब्दस्य समासचरमावयवे रूढेरिति भावः । रूढस्यैव ग्रहणमित्येतदन्वाख्यापकं 'द्वन्द्वे चे'ति इति तत्त्वम् । प्रत्याख्यानेऽपि न मध्यमस्य प्राप्तिः, मध्यसुबन्तस्यापि स्वादिपरत्वेनविशेषणादिति बोध्यम् ।

प्रस्तावादिति । 'आत' इत्यस्यारम्भादित्यर्थः । सिच इति । अनेन विधित्वाऽसंभवो दर्शितः ।

भाष्ये—श्रूयमाणेति । श्रूयमाणत्वार्थकं विभक्तिविशेषणमित्यर्थः तल्लाभायोपायं दर्शयति—षष्ठी-

---

१—'वाक् च स्रक् च त्वक् च वाक्स्रक्त्वचम्' इति मुद्रितपाठः । † गातिस्था० २ । ४ । ७७

‡ सिजभ्यस्तविदिभ्यश्च ३ । ४ । १०९ २—'सिच उसो' कीलहार्नसम्मतः पाठः ।

३—क्वचिन्न ।

त्स्थग्रहणस्य प्रयोजनम् । किम् ? सविभक्तिकस्य वान्नावादयो यथा स्युरिति । नैतदस्ति प्रयोजनम् । पदस्य [ ८ । १ । १६ ] इति वर्तते । विभक्त्यन्तं च पदम्, तत्राऽन्तरेणापि स्थग्रहणं सविभक्तिकस्यैव भविष्यति । भवेत्सिद्धं यत्र विभक्त्यन्तं पदम्, यत्र तु खलु विभक्तौ पदं तत्र न सिध्यति—ग्रामो वां दीयते, ग्रामो नौ दीयते । जनपदो वां दीयते, जनपदो नौ दीयते । सर्वग्रहणमपि प्रकृतमनुवर्तते+ । तेन सविभक्तिकस्यैव भविष्यति ।

इह—'चक्षुष्कामं याजयांचकारे'ति× 'तिङ्ङतिङः' [ ८ । १ । २८ ] इति, तस्य च निघातस्तस्माच्चाऽनिघातः प्राप्नोति ।

## आमि लिलोपात्तस्य चानिघातस्तस्माच्च निघातः ॥ १० ॥

आमि लिलोपात्तस्य चाऽनिघातस्तस्माच्च निघातः सिद्धो भविष्यति ।

प्र०—तपसि स्थितः । तपो न जहातीत्यर्थः । तथा-'समये तिष्ठ सुग्रीवे'ति, समयं मा हासीरित्यर्थः । तेन सति स्थग्रहणे तत्सहितयोः कार्यं विज्ञायते । अथवा यथा 'रथस्थ आनीयता' मिति सरथ आनीयते, तथा षष्ठ्यादिसहितयोर्युष्मदस्मदोः कार्यं भवतीति विज्ञायते । **पदस्येति वर्तत इति** । केवलयोः पदत्वाऽभावात्तदवयवं पदं गृह्यत इति भाव. । **यत्र स्विति** । अत्र हि ते एव पदे इति तयोरेवादेशप्रसङ्गः । **सर्वग्रहणमपीति** । अलेकाल्त्वात्सर्वादेशत्वे लब्धे सर्वग्रहणमनुवृत्तं षष्ठ्यन्तं विपरिणम्यमानं सर्वस्य प्रयोगार्हस्य विभक्त्यन्तस्य स्थानित्वमवगमयतीत्यर्थ. ।

**याजयांचकारेति** । परत्वात्तिबादिषु कृतेषु आम इति लुकि प्रत्ययलक्षणेन 'याजया'मित्यस्य तिङन्तत्वमिति पूर्वः पक्षः ।

**आमि लिलोपादिति** । नाप्राप्तेषु तिबादिषु लुगारभ्यमाणस्तेषां बाधकः ।

उ०—त्यादि । **अथवा यथा रथस्थेति** । स्थशब्दः साहित्यवाचीति भावः । 'तदवयव'मिति बहुव्रीहिः । 'युष्मदस्मदो' रिति तद्घटितसमुदाये लाक्षणिकमिति भावः । मुख्येऽर्थे एव पदसामानाधिकरण्ये संभवति किं लक्षणयेत्याह—**अत्र हीति** । यद्यपि द्वितीयायां षष्ठ्या च तयोः पदत्वाऽसंभवेन तत्र लक्षणाया आवश्यकत्वेनान्यत्राप्येकरूपत्वाय लक्षणा युक्ता । तथापि पदस्येत्यस्य 'मादुपधाया' इत्यादावयवषष्ठीत्वस्य क्लृप्ततया पदावयवयोरित्यर्थ एव स्यादत ईदृशलक्षणाऽलाभः सर्वग्रहणसाध्य एवेत्याह—**सर्वग्रहणमिति** । 'अनुदात्तं सर्व'मित्यतः ।

ननु लावस्थायामेव अन्तरङ्गानपीतिन्यायेन लुकि प्रत्ययलक्षणेनापि न तिङन्तत्वमत आह—**परत्वादिति** ।

**नाप्राप्तेष्विति** । 'अन्तरङ्गानपी'ति न्यायादित्यपि बोध्यम् ।

+ अनुदात्तं सर्वमपादादौ ८ । १ । १८ × आमः २ । ४ । ८१

## अङ्गाधिकार इटो विधिप्रतिषेधौ ॥ ११ ॥

अङ्गाधिकारे इटो विधिप्रतिषेधौ न सिध्यतः । जिगमिष संविवृत्स* । अङ्गस्येतीटो विधिप्रतिषेधौ न प्राप्नुतः † ।

## क्रमेर्दीर्घत्वं ॥ १२ ॥

किं च ? इटश्च विधिप्रतिषेधौ । नेत्याह । अदेशेऽयं चः पठितः । क्रमेश्च दीर्घत्वम् । उत्क्राम संक्रामेति‡ ।

इह किंचिदङ्गाधिकारे लुमता लुप्ते प्रत्ययलक्षणेन भवति, किञ्चिच्चाऽन्यत्र न भवति । यदि पुनः-'न लुमता तस्मिन्' इत्युच्येत । अथ 'न लुमता तस्मिन्नि'त्युच्यमाने किं सिद्धमेतद्भवति-'इटो विधिप्रतिषेधौ' 'क्रमेर्दीर्घत्वं च' ? बाढं सिद्धम् । नेटो विधिप्रतिषेधौ परस्मैपदेष्वित्युच्यते । कथं तर्हि ? सकारादाविति, तद्विशेषणं परस्मैपदग्रहणम् । न खल्वपि

प्र०—अङ्गाधिकार इति । 'अङ्गस्ये'ति स्वर्यते । तेनाऽङ्गाधिकारविहितं यत्कार्यं तल्लुमता लुप्ते प्रत्यये न भवतीति सूत्रार्थे दोषोपन्यासः । जिगमिषेति । 'अतो हे'रिति लुकि कृते, 'गमेरिट् परस्मैपदेष्वि'तीड् न प्राप्नोति । संविवृत्सेति । 'न वृद्भ्यश्चतुर्भ्य' इतीट्प्रतिषेधः ।

क्रमेरिति । कार्यसमीपे श्रूयमाणश्चकारः कार्यमेव समुच्चिनुयादित्यभिप्रायेणाह-किञ्चेति । अदेश इति । कार्यस्य समुच्चेतव्यस्याऽभावात्सामर्थ्यात्प्रकृतिसमुच्चय इत्यर्थः ।

किञ्चिच्चेति । त्रिनिकित्स्वरा । न लुमता तस्मिन्निति । लुमता यो लुप्तः प्रत्ययस्तस्मिन्यत्कार्यमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः । 'अत्रय' इत्यत्र स्वरो न भवति, तद्धितस्यैव कितोऽन्तोदात्तत्वविधानात् । लुकि कृते कार्यिणोऽसत्त्वात् । प्रत्ययलक्षणं हि यदन्यस्य कार्यं

उ०—इट्प्रतिषेध इत्यत्र 'न प्राप्नोती'त्यनुषङ्गः ॥ दीर्घत्वं-क्रमः परस्मैपदेष्विति । समुच्चिनुयादिति । 'तच्चाऽसंभवी'ति शेषः । इत्यभिप्रायेणेति । प्रश्न इत्यर्थः । भाष्ये तटस्थोऽभिप्रायानभिज्ञ उत्तरयति-इटश्चेति । आचार्य आह—नेत्याहेति । गम इड्विधिः, वृतेस्तत्प्रतिषेधः, क्रमेश्च दीर्घत्वं न सिध्यतीत्यर्थं इति भावः ।

अनन्तरोक्तातिव्याप्तेरुपक्रमोक्ताऽव्याप्तेश्चाङ्गाधिकारपरत्वं न युज्यत इत्युपसंहरति भाष्ये—इहेति । त्रिनिकित्स्वरा इति । इदमुपलक्षणम्, अहर्ददातीत्यत्रासुपीति प्रतिषेधस्यापि । वस्तुतः किञ्चिच्चेत्यत्र किञ्चित्पदेन 'रोऽसुपी'त्येव । ञ्नित्स्वरविषये सौवरीणां सप्तमीनां तदन्तसप्तमीत्वेन 'न लुमता तस्मिन्नि'ति न्यासेऽपि वचनस्यावश्यकत्वादिति बोध्यम् । तस्मिन् यत्कार्यमिति । तस्मिन्परतस्तन्निमित्तकं तत्प्रकृतिभूतस्य यत्कार्यमित्यर्थः । 'कित' इत्युदाहरणभूताऽत्रय इत्यस्योभयपक्षेऽप्यसिद्धेस्तत् परिहरति—अत्रय इत्यत्रेति । यदन्यस्येति । 'प्रत्ययजमित्येवसिद्धे लक्षणग्रहणसामर्थ्येन प्रत्ययनिमित्तकमेव, न तु प्रत्ययप्रत्यानिकमित्यर्थादिति भावः । युक्त्यन्तरमप्याह—नहीति । षष्ठ्यर्थस्योच्चारणस्य प्रसङ्गस्य वक्तुमशक्यत्वादिति भावः । अत एव नखनिर्भिन्न इत्यादावैसादिकं न । एवम-

* अतो हेः ६ । ४ । १०५ † गमेरिट् परस्मैपदेषु; न वृद्भ्यश्चतुर्भ्यः ७ । २ । ५८; ५९

‡ क्रमः परस्मैपदेषु ७ । ३ । ७६

क्रमेर्दीर्घत्वं परस्मैपदेष्वित्युच्यते । कथं तर्हि ? शितीति, तद्विशेषणं परस्मैपदग्रहणम् ।

**न लुमता तस्मिन्निति चेद्धनिणिङादेशास्तल्लोपे ॥ १३ ॥**

'न लुमता तस्मिन्नि'ति चेद्धनिणिङादेशास्तल्लोपे न सिध्यन्ति । अवधि भवता दस्युः । अगायि भवता ग्रामः । अध्यगायि भवताऽनुवाकः । तल्लोपे कृते+ लुङीति हनिणिङादेशा न प्राप्नुवन्ति × ।

नैष दोषः । नलुङीति हनिणिङादेशा उच्यन्ते । किं तर्हि ? आर्धधातुक इति । तद्विशेषणं लुङ्ग्रहणम् ।

इह च—सर्वस्तोमः सर्वपृष्ठः—'सर्वस्य सुपी' त्याद्युदात्तत्वं न प्राप्नोति । तत्राऽपि वक्तव्यम् । न वक्तव्यम् । 'न लुमताङ्गस्ये'त्येव सिद्धम् । कथम् ? न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते । किं तर्हि ? योऽसौ लुमता लुप्यते तस्मिन् यदङ्गं तस्य यत्कार्यं तन्न भवति । एवमपि सर्वस्वरो न सिध्यति । कर्तव्योऽत्र

---

प्र०—तत्प्रत्ययलोपेऽपि भवति । न तु तदपि । न हि वचनेनाऽसतः कार्यित्व शक्यते प्रतिपादयितुम् । **तद्विशेषणमिति** । विशेषण एवोपक्षीणत्वात्कार्यं प्रति निमत्तभावो नास्तीत्यर्थः ।

**हनिणिङादेशा इति** । लुका लुङो विषयस्यापहाराद्विषयसप्तम्याश्रयणेऽप्यसिद्धिः ।

**तद्विशेषणं लुङ्ग्रहणमिति** । तेन लुङ्परे च्णिण्यादेशविधानम् ।

**न लुमतेति** । 'अङ्गस्ये'त्यस्य स्वरितत्वाऽप्रतिज्ञानात्तत्र लुमता लुप्ते प्रत्यये यदङ्गं तस्य यत्कार्यं प्रत्ययनिमत्तमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थ । **कर्तव्योऽत्र यत्न इति** ।

---

उ०—सतः सत्तापि न वचनेन शक्येति बोध्यम् । परस्मैपदपरसादेरङ्गत्वनिमित्तस्येडित्याद्यर्थे न दोष इत्याह—**विशेषण एवेति** । एवं च लुप्तप्रत्ययनिमित्तकं तत्प्रकृतेस्तन्न कार्यमिति भावः ।

नन्वार्धधातुक इत्यादीना विषयसप्तमीत्वात्पूर्वमेव तेषा प्रवृत्तेर्न प्रत्ययलक्षणापेक्षेत्यत आह—**लुकेति** । एवं च विषयत्वज्ञानायाऽवश्यं प्रत्ययलक्षणमाश्रयणीयम् । तच्च 'न लुमता तस्मि'न्निति न्यासे न प्राप्नोतीति भावः ।

**लुङ्परे च्णिणीति** । लुङ्परार्धधातुकविषये इत्यर्थ इति भावः ।

**भाष्ये—तत्रापीति** । 'न लुमता तस्मिन्नि'त्येतदित्यर्थः । **लुप्ते प्रत्यये यदङ्गमिति** । लुप्तप्रत्ययनिरूपिताङ्गसंज्ञकस्य यत्कार्यमित्यर्थ । 'उत्क्रामे'त्यादौ तु परस्मैपदनिमित्ताऽङ्गसंज्ञकस्य न कार्यम् । किन्तु शिदादिनिमित्ताङ्गसंज्ञकस्येति न दोषः । 'संजिगमिषे'त्यादौ सनः कार्य नाङ्गसंज्ञकस्येति न दोषः । किञ्च परस्मैपदग्रहणस्य तङानाभावोपलक्षणत्वादपि न दोषः । 'आगायी'त्यादौ तु न दोषः, लुङ्निमित्ताङ्गत्ववतश्चिणन्तस्य कार्याऽभावादिति बोध्यम् । **भाष्ये—एवमपीति** । अङ्गाधिकारप्रतिनिर्देशाऽभावेऽपीत्यर्थः । **वचनं कर्तव्यमिति** ।

---

\+ च्णिणो लुक् ६ । ४ । १०४ × लुङि च; इणो गा लुङि, विभाषा लुङ्लृङोः २ । ४ । ४३; ४५; ५०

यतः ॥ ६३ ॥

## अलोऽन्त्यात्पूर्व उपधा ॥ १ । १ । ६५ ॥

**किमिदमल्ग्रहणमन्त्यविशेषणम् ? एवं भवितुमर्हति ।**

**उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातप्रतिषेधः ॥ १ ॥**

उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातस्य प्रतिषेधो वक्तव्यः । संघातस्योपधासंज्ञा प्राप्नोति । तत्र को दोषः ? 'शास इदङ्हलोः' [ ६ । ४ । ३४ ] । शिंष्ट्वा शिष्टः । संघातस्येत्त्वं प्राप्नोति ।

यदि पुनरलन्त्यादित्युच्यते । एवमप्यन्त्योऽविशेषितो भवति । तत्र को दोषः ? संघातादपि पूर्वस्योपधासंज्ञा प्रसज्येत । तत्र को दोषः ? 'शास इदङ्हलोः' । शिष्टः[1]

---

प्र०—सर्वशब्दार्थं वचनं कर्तव्यम् ॥ ६३ ॥

**अलोऽन्त्यात्** । **किमिदमिति** । प्रथमा पञ्चमी वेति सन्देहात्प्रश्नः । **एवमिति** । प्रथमायामभिप्रेतायामसन्देहार्थमलित्येकवचनं वक्तव्यं स्यात् । अन्त्यादिति पञ्चमी साहचर्याच्चाऽल इत्यपि पञ्चम्यन्तमिति भावः ।

**अल्ग्रहणमिति** । निर्दिश्यतेऽभिधीयतेऽनेनेति निर्देशः । यद्यन्त्यः प्रत्याय्यत इत्यर्थः । **सङ्घातप्रतिषेध इति** । पूर्वस्याऽविशेषितत्वात्समुदायावयवसन्निधौ च समुदायस्यैव कार्यित्वात्, एकाज्द्विर्वचन इवेति भावः । अन्त्यविशेषणत्वे वर्णनिर्देशे जातिग्रहणेप्यल इत्युपादानसामर्थ्यात्संख्या विवक्ष्यते ।

**यदिपुनरिति** । अत्राप्यल्ग्रहणसामर्थ्यात् संख्या विवक्ष्यते । पिबेरदन्तत्वप्रतिज्ञानाच्च लिङ्गात् । अल्समुदायस्य संज्ञित्वे गुणस्य प्राप्तिरेव नास्ति किमदन्तत्वप्रतिज्ञानेन । **सूत्रं चेति**

---

उ०— ।वर्यः सप्तम्यस्तदन्तसप्तम्य'इत्येतत् ॥ ६३ ॥

**अलोऽन्त्यात्** । **असन्देहार्थमिति** । अन्त्यात् पूर्वोऽलित्येव वदेदिति भावः ।

'अल्ग्रहणमन्त्यनिर्देश' इत्यनयोः सामानाधिकरण्यमनुपपन्नमत आह—**अभिधीयतेऽनेनेति** । अल्ग्रहणमन्त्यप्रत्यायकं चेदित्यर्थः । 'घञबजपः पुंसी'ति निर्देशशब्दस्य पुंस्त्वम् । प्राप्तिपूर्वकत्वात्प्रतिषेधस्य प्राप्तिमाह—**पूर्वस्येति** । **एकाजिति** । यद्यप्यत्र समुदायसंज्ञया नावयवानामनुग्रहस्तथापि कदाचिदविशेषात्सङ्घातस्यापि स्यादित्यनिष्टमात्रापादने भाष्यतात्पर्यमिति बोध्यम् । ननु संज्ञिवदवधिरपि कस्माज्जातिग्रहणप्राप्तः समुदायो न निषिध्यतेऽत आह—**अन्त्येति** । **संख्या विवक्ष्यत इति** । ज्ञापकसिद्धस्याऽसार्वत्रिकत्वादत्राऽनेकाव्यक्तिर्न गृह्यत इति भावः । सङ्ख्याविवक्षा तु उद्देश्यगतत्वादयुक्ता ।

**पिबेरदन्तत्वेति** । अल्समुदायस्य लघुत्वाऽभावादिति भावः । सूत्रं तु उखादौ चरितार्थम् । कदा-

---

१—'शिष्टः शिष्टवान्' पा० ।

शिष्टवान् । शकारस्येत्त्वं प्रसज्येत । सूत्रं च भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तम् 'उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्सङ्घातप्रतिषेधः' इति । नैष दोषः । अन्त्यविज्ञानात्सिद्धम्[1]। सिद्धमेतत् । कथम् ? अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति* ।

**अन्त्यविज्ञानात्सिद्धमिति चेन्नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ २ ॥**

अन्त्यविज्ञानात्सिद्धमिति चेत्तन्न । किं कारणम् ? 'नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे' । अनर्थकेऽलोन्त्यविधिर्नेत्येषा परिभाषा कर्तव्या । किमविशेषेण ? नेत्याह । 'अनभ्यासविकारे' । अभ्यासविकारान्वर्जयित्वा । 'भृञामित्' [ ७ । ४ । ७६ ] 'अर्तिपिपर्त्योश्च' [ ७७ ] इति ।

कान्येतस्याः परिभाषायाः प्रयोजनानि ?

**प्रयोजनमव्यक्तानुकरणस्यात इतौ ॥ ३ ॥**

[ 'अव्यक्तानुकरणस्याऽत इतौ' ( ६ । १ । ९८ ) ] इत्यन्त्यस्य प्राप्नोति । अनर्थकेऽलोऽन्त्यविधिर्न भवतीति न दोषो भवति ।

नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति नान्त्यस्य पररूपं भवतीति, यदयं—'नाम्रेडितस्यान्त्यस्य तु वा' [ ६ । १ । ९९ ] इत्याह ।

प्र०—'अलन्त्या'दिति पठ्यमान इत्यर्थः ।

अन्त्यविज्ञानादिति । उपधाया इति षष्ठ्यन्त्यमल नीयत इत्यर्थः ।

अनभ्यासविकार इति । अभ्यासोऽनर्थकः । शब्दस्य ह्यावृत्तिर्नाऽर्थस्य ।

अव्यक्तानुकरणस्येति । अव्यक्तानुकरणस्य योऽच्छब्दस्तस्येतौ पररूपमिति सूत्रार्थः ।

यदयमिति । 'वाऽऽम्रेडितस्ये'त्येव वक्तव्यं स्यात् ।

उ०—चिदिकारस्याप्युपधात्वेन चिन्त्यमिदम् ।

शब्दस्य इति । एकाज्धातुविषयमिदम् । अनेकाच्तु प्रथमस्यैकाचो द्वित्वेनार्थवत्त्वशङ्कैव नेति बोध्यम् । एवं चोत्तरखण्ड एवाऽर्थवानिति भावः ।

अव्यक्तानुकरणस्येति । अच्छब्दान्तस्याव्यक्तानुकरणस्येत्यर्थे सम्पूर्णस्याऽच्छब्दस्य पररूपानापत्तिरित्यतो वैयधिकरण्यमुक्तम् । अव्यक्तानुकरणं योऽच्छब्द इति तु नार्थः, 'एकाचो ने'ति निषेधारम्भादित्यलम् ।

ननु विकल्पार्थं तदावश्यकमत आह—आम्रेडितस्येति । 'अन्त्यस्य पूर्वेण नित्ये पररूपे प्राप्ते' इति शेषः ।

१ वार्तिकमिदमिति केचित् । * अलोन्त्यस्य १ । १ । ५२ २—इदं क्वाचित्कम् ।

**ध्वसोरेद्धावभ्यासलोपश्च ॥ ४ ॥**

**ध्वसोरेद्धावभ्यासलोपश्च [ ६ । ४ । ११९ ] इत्यन्तस्य प्राप्नोति । अनर्थकेऽलोऽन्त्यविधिर्नेति न दोषो भवति ।**

**एतदपि नास्ति प्रयोजनम् । पुनर्लोपवचनसामर्थ्यात्सर्वस्य भविष्यति ।**

**अथवा शिल्लोपः करिष्यते स 'शित्सर्वस्ये'ति† सर्वादेशो भविष्यति । स तर्हि शकारः कर्तव्यः ? न कर्तव्यः । क्रियते न्यास एव । द्विशकारको निर्देशो 'ध्वसोरेद्धावभ्यासलोपश्श्चे'ति ।**

**प्र०—ध्वसोरिति** । 'अनभ्यासविकारे' इति प्रतिषेधो रूपवत्यादेशे । लोपस्तु नीरूपः । तथा च पस्पशायां 'लोपागमवर्णविकारज्ञ' इति लोपविकारौ भेदेन निर्दिष्टौ ।

**पुनर्लोपेति** । लोपो यीत्यतो लोपग्रहणेऽनुवर्तमान इति भावः । तत्र ध्वसोरेद्धावभ्यासस्य चेति वक्तव्यम् । तत्र व्याख्यानादभ्यासस्य लोप एव भविष्यति, नत्वेत्त्वम् । योगविभागो वा करिष्यते'ध्वसोरेद्धौ' । ततोऽ'भ्यासस्ये'ति । अत्र च लोपोऽनुवर्तिष्यते । तत्र पुनर्लोपवचनात्सर्वापहारार्थादलोऽन्त्यस्येति बाध्यते ।

**द्विशकारको निर्देश इति** । लोपशब्दात् कृदन्तात्संज्ञिनार्थेनाऽर्थवत्त्वाद्विभक्तौ कृतायां शकारः प्रतिनिर्दिश्यते । तस्य चेत्संज्ञायां सत्यां सर्वादेशो लोपो भवति । इत्संज्ञोपदेश एव प्रवर्तते । तत्कार्यं तु प्रयोग इत्येष सिद्धान्तः' ।

**उ०—भेदेन निर्दिष्टाविति** । यद्यप्येकदेशविकृतस्येत्यादौ लोपोऽपि विकारपदेनोच्यते तथापि व्याख्यानादेवात्रेदृशार्थोऽवगतिरिति बोध्यम् ।

ननु लोपग्रहणाऽभावे ध्वसोरेद्धावभ्यासस्येत्युक्ते चकाराऽभावादन्यवचनाच्च प्रकृताऽसंबन्धे एत्वमेव स्यादत आह—**तत्र ध्वसोरित्यादि** । ननु चेनानुवृत्तावपि लोपोऽभ्यासस्यैवेत्यत्र नियामकाऽभावात्पर्यायेण त्रयाणामप्येत्वलोपौ स्यातामत आह—**तत्र व्याख्यानादिति** । आगन्तूनामन्ते निवेशेनाभ्यासस्य लोपसंनिहितत्वादिति भावः । नन्वभ्यासपदोत्तरश्चकारः स्थान्यन्तरमेव समुच्चिनुयान्न विधेयान्तरमिति एत्वमभ्यासस्यापि स्यादतः परिहारान्तरमाह—**योगविभागो वेति** । **अत्रेति** । नत्वेत्वमित्यर्थः । योगविभागसामर्थ्यादिति भावः । **सर्वापहारेति** । लोप एव, नावशेषः कस्यचिदित्यर्थादिति भावः ।

ननु लोपशब्दस्याऽसंज्ञात्वेनानर्थक्यात्सुरेव न स्यात्, उत्पत्तौ वा हल्ङ्यादिलोपाद्द्विशकारक इत्यनुपपन्नमत आह—**लोपशब्दादिति** । पदस्य संयोगान्तत्वाऽभावादसन्देहाय च झलां जशित्यत्र जश्त्वव-त्संयोगान्तलोपसंयोगादिलोपौ नेति बोध्यम् । **इत्संज्ञेति** । धातुप्रातिपदिकप्रत्ययनिपातागमादेशानां हलन्त्यमितीत्संज्ञायामपि न दोषः । शस्य स्वरूपेणाऽर्थवत्तया प्रातिपदिकत्वात्, कुण्डिनच इव । **उपदेश** इति तु तत्र नानुवर्तत इति तत्र भाष्ये स्पष्टम् । **उपदेश एवेति** । अन्तरङ्गत्वादिति भावः । एतेन लोपविधानकाले शित्वाऽभावात्कथं सर्वादेश इत्यपास्तम् । **कार्यं त्विति** । अनेकाल्शिदित्यादौ समीपेऽप्यवयवत्वारोपेण न दोष इति भावः । 'एकान्ता अनुबन्धा' इति मुख्यपक्षे तु आद्यमेव समाधानमिति बोध्यम् ।

† अनेकाल्शित्सर्वस्य १ । १ । ५५

## आपि लोपोऽकोऽनचि ॥ ५ ॥

तिष्ठति सूत्रम्, अन्यथा व्याख्यायते । आपि 'हलि लोपः' [ ७ । २ । ११३ ] इत्यन्त्यस्य प्राप्नोति । अनर्थकेऽलोन्त्यविधिर्नेति न दोषो भवति ।

एतदपि नास्ति प्रयोजनम् । अन एव लोपं वक्ष्यामि । तदनो ग्रहणं कर्त्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? अनाप्यकः' [ ७ । २ । ११२ ] इति । तद्वै प्रथमानिर्दिष्टं, षष्ठीनिर्दिष्टेन चेहार्थः । 'हली'त्येषा सप्तमी अनिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति—'तस्मिन्निति निर्दिष्टे पूर्वस्य' [ १ । १ । ६६ ] इति ।

## अत्र लोपोऽभ्यासस्य ॥ ६ ॥

'अत्रलोपोऽभ्यासस्य' [ ७ । ४ । ५८ ] इत्यन्त्यस्य प्राप्नोति । 'नानर्थकेऽलोऽन्त्यविधि'रिति न दोषो भवति ।

एतदपि नास्ति प्रयोजनम् । अत्रग्रहणसामर्थ्यात्सर्वस्य भविष्यति ।

---

**प्र०—तिष्ठति सूत्रमिति** । लक्ष्यलक्षणभावस्याऽविवक्षितत्वात्तिष्ठत्सूत्रमिति न कृतम् । तत्रायमर्थःतिष्ठति सूत्रम् ।

न प्रत्याख्यायते । तत्तु अन्यथा व्याख्यायते । तत्राऽनचीत्यनेन हलीत्यस्यार्थो व्याख्यातः । आप्यक इत्यनुवृत्तिर्दर्शिता ।

**अन एवेति** । 'अनाप्यक' इति सामान्येनाऽनादेशं विधाय हलादौ तु तस्यैव लोपो विधीयते इत्यर्थः । येननाव्यवधानमिति त्यदाद्यत्वेन व्यवधानमाश्रीयते ।

**अत्रग्रहणसामर्थ्यादिति** । मीमादीनामधिकारादेव सिद्धेरत्रग्रहणादयमर्थ आश्रीयते—योऽभ्यासत्वेन निर्ज्ञातस्तस्य समग्रस्य लोपो नत्वलोऽन्त्यस्येति ।

---

उ०—भाष्ये—**अन्यथाव्याख्यायत इति** । न तु तत्प्रत्याख्याय तत्स्थाने वचनान्तरं पठितमिति भ्रमितव्यमिति भावः । **इत्यन्त्यस्येति** । एवं च तेन दलोपे आभ्यामित्यसिद्धिरिति भावः ।

ननु मस्थानिकत्यदाद्यत्वेन व्यवधानान्नानो हलादिविभक्तिपरतेत्यत आह—**येन नेति** । आप्परत्वेनेदमो विशेषणाच्चेत्यपि बोध्यम् । इदमिदो लोप इत्यर्थेऽप्यावश्यकम् । एवं च नलोपे द्वयोरकारयोः पररूपे **सुपि चेति** दीर्घे सिद्धमाभ्यामिति ।

**अत्रग्रहणादिति** । अत्रशब्देन पुनः सनः परामर्शात्सनि योऽभ्यासस्वाक्रान्तस्तस्य सर्वस्य लोप इत्यर्थ इति भावः ।

अस्त्यन्यदत्रग्रहणस्य प्रयोजनम् । किम् ? सन्नधिकारोऽपेक्ष्यते । इह मा भूत्—दधौ ददौ । अन्तरेणाऽप्यत्रग्रहणं सन्नधिकारमपेक्षिष्यामहे ।

संस्तर्हि सकारादिरपेक्ष्यते—सनि सकारादाविति । इह मा भूत्—जिज्ञापयिषति । अन्तरेणाप्यत्रग्रहणं सनं सकारादिमपेक्षिष्यामहे ।

प्रकृतयस्तर्ह्यपेक्ष्यन्ते । एतासां प्रकृतीनां लोपो यथा स्यात् । इह मा भूत्—पिपक्षति यियक्षति । अन्तरेणाप्यत्रग्रहणमेताः प्रकृतीरपेक्षिष्यामहे ।

विषयस्तर्ह्यपेक्ष्यते 'मुचोऽकर्मकस्य गुणो वा' [ ७ । ४ । ५७ ] इति । इह मा भूत्—मुमुक्षति गामिति । अन्तरेणाप्यत्रग्रहणमेतं विषयमपेक्षिष्यामहे । कथम् ? अकर्मकस्येत्युच्यते तेन यत्रैवायं मुचिरकर्मकस्तत्रैव भविष्यति ।

तस्मान्नार्थोऽनया परिभाषया 'नानर्थकेऽलोऽन्त्यविधि'रिति ।

**अलोऽन्त्यात् पूर्वोऽलुपधेति वा ॥ ७ ॥**

अथवा व्यक्तमेव पठितव्यम्—अलोऽन्त्यात्पूर्वोऽलुपधासंज्ञो भवतीति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।

**अवचनाल्लोकविज्ञानात्सिद्धम् ॥ ८ ॥**

अन्तरेणापि वचनं लोकविज्ञानात् सिद्धमेतत् । तद्यथा—लोके 'अमीषां ब्राह्मणानामन्त्यात्पूर्व आनीयता' मित्युक्ते यथाजातीयकोऽन्त्यस्तथाजातीयकोऽन्त्यात्पूर्व आनीयते ॥ ६५ ॥

---

**प्र०—यथाजातीयकोऽन्त्य इति** । एतच्च ब्रुवता पञ्चमीपक्ष एवाश्रितः । षष्ठीप्रथमयोरपि न दोषः । षष्ठीपक्षे निर्धारणे षष्ठी । निर्धारणं च तुल्यजातीयस्य भवतीति अलां मध्ये योऽन्त्योऽल्तस्मात्पूर्व उपधासंज्ञ इत्यलेवोक्तान्न्यायात्प्रतीयते । प्रथमाबहुवचनपक्षेऽप्ययमर्थः—अन्त्यात्पूर्वोऽलुपधासंज्ञ इति । 'अल' इति जातौ बहुवचनम् । अवधिमत्तुल्यजातीयकश्चावधिरिति अलोन्त्यादिति विज्ञायते ॥ ६५ ॥

---

उ०—भाष्ये—**विषयमपेक्षिष्यामह इति** । 'मुचोऽकर्मकस्य गुण' इत्यनुवर्तनीयम् । यत्र मुचोऽकर्मकस्य गुणस्तत्राभ्यासस्य लोप इत्यर्थः । अकर्मकग्रहणमात्रानुवृत्तौ तु 'मुमुक्षते वत्सः स्वयमेवे'त्यत्रापि स्यादिति भावः । 'विभाषा भव'दिति वार्तिकेऽपि वस्येत्येव सिद्धेऽवस्येत्युच्चारणसामर्थ्यादलोऽन्त्यस्येति न प्रवर्तते इति प्रत्याख्याता परिभाषा ।

एवं च अन्त्यविज्ञानात्सिद्धमित्यस्य स्थितत्वाद्वार्तिके वाशब्दप्रयोगस्तदाह—**अथवा व्यक्तमेवेति** ।

**एतच्चेति** । अवधिनाऽवधिमतो निर्णयं ब्रुवतेत्यर्थः । संयोगोपधेत्यादिव्यवहारास्तु गौणा इति भावः । **षष्ठीप्रथमयोरपीति** । दृष्टान्तेऽमीषां ब्राह्मणानामित्युपाददताभगवता सूचितमिदम् । **उक्तान्न्यायादिति** । भाष्योक्तादित्यर्थः । **जातौ बहुवचनमिति** । भाष्यकृता जात्याख्यायामिति सूत्रप्रत्याख्यानादिदं चिन्त्यम् ॥६५॥

